such a manner that all our belongings like wife, children, kinsmen, wealth, land etc. may be healthy and develop mutual goodwill. 23, 24

ध्यानम् -

लोकानामपमृत्युदोषहरणं दैवोपघातापहं
रुद्रं गौतमनामकेन मुनिना गोमायुना चार्चितम् ।
हासक्लिष्टपुरत्रयं गिरिधनुष्पाणिं रथाधिष्ठितं
सङ्ग्रामोचितदिव्यवेषमनिशं ध्यायेत्पुरारिं प्रभुम् ।।
कायोपाधिवशेन सन्नपि निराकारोऽपि जीवात्मको
यस्यांशः स्वयमीदृशं वपुरभेदेनैव गृह्णाति यः ।। २५ ।।

**Dhyana :-** (Common to Mantras 4 and 5)

One should always meditate on the Lord, the destroyer of the (three) cities, who, shining in His divine battle-dress, mounts the chariot, and armed with the bow of mountain (Sumeru), harasses the three cities just with a (loud) laughter. Rudra worshipped in this form by the sages Gautama and Gomayu, is the reliever of all woes of the people such as accidental and untimely deaths and natural calamities. The Lord, though conditioned by human form and appearing like a Jiva, is truely a part of the whole (Brahman) and should be realised as identical with Paramatman and not as different from Him. 25

अध्य॑वोचदधिव॒क्ता प्र॑थ॒मो दैव्यो॑ भि॒षक् ।
अ॒हीँश्च॒ सर्वा॑ञ्ज॒म्भय॑न्त्सर्वा॑श्च यातुधा॒न्यः॑ ॥ ६ ॥

जन्मव्याधिजरादिदुःखदमहासंसारकष्टज्वर -
प्लुष्टानां वितरन् सुदुर्लभमपि त्वद्भक्तिमात्रौषधम् ।
भीतानाम्[1]भयार्थिनामभयदेष्वग्रेसरोऽयं भिषक्[2]
सर्वेषां भिषजां किलेति निगमा यं संस्तुवन्त्यादरात् ॥ २६ ॥

## Mantra - 6 Meaning of प्रथमो भिषक् -

Rudra who gives the rare and the only medicine of devotion (for Him) to those who are afflicted (burnt) by the severe fever (heat) of worldly life which is the cause of miseries such as birth, illness, old age etc., is the foremost among the physicians who give relief to the distressed seeking refuge, and hence is praised in holy scriptures (Vedas) as the physician of all physicians. 26

दुर्ज्ञेयोऽपि परात्परोऽपि जगतां त्राणाय मोहाय वा
दे[3]वेष्वेकतमोऽहमेव इति यः प्रादुर्भवन् क्रीडति ।
क्रीडायां सुखरूप एव विजिगीषायां जयात्मा स्वयं
भक्तात्मा व्यवहारके भवति चोद्योतात्मको द्योतने ॥ २७ ॥
नित्यं स्तुत्यमयः स्तुतावपि गतौ गन्तव्यरूपोऽथवा
वाय्वात्मा बहुधा विभाति हि बहुष्वर्थेषु चैकोऽपि यः ।

---

(1) दीनानाम् - क ।

(2) भिषक् वैद्यः "भिषज् चिकित्सायां," कण्ड्वादिः । व्याधितापसंसारादीनां व्यसनानां चिकित्सक इत्यर्थः । "भिषक्तमं त्वां भिषजां शृणोमि "इति च मन्त्रान्तरम् । यद्वा भियां सादयिता नाशयिता भिषक् । यद्वा भीतौ सज्जते मनसा प्राप्यते, अभयत्वात् । यद्वा, देहभेदनैः सजयत्यनुगृह्णाति इति वा भिषक् , पृषोदरादिः । (भ - भा)

(3) दैव्यो देवेषु भवः, 'देवाद्यञञौ' इतियञ् । यद्वा देवनं देवः, दिव्यर्थानां क्रीडानामन्यतमः, तत्र भवः - क्रीडायां सुखरूपः । विजिगीषायां जयरूपः, व्यवहारे विविक्तरूपः । द्योतने प्रकाशरूपः । स्तुतौ स्तुत्यरूपः। गतौ गन्तव्यरूपो वायुरूपो वा (भ - भा)

देवानामपि यः स्वयं मुखमभूद्[1]-ब्रह्मादिकानां प्रभुः
दिव्यज्ञानवतां[2] प्रधानपुरुषः सर्वस्य लोकस्य यः ॥ २८ ॥

## Meaning of प्रथमो दैव्यः–

Though he is the highest Lord (परात्परः) who is difficult to be comprehended, He, in order to save or delude the world (people), sports proclaiming Himself as one among the Gods. He is joy in sport, victory in the effort to win, the devotee among the worldly men (or a secluded one in worldly matters) and the light in the flame. He is the object of praise in the Stotras, the destination in journey; or, in His form as air, though one, He appears differently in different objects. He in His form as fire is the mouth of Gods including ब्रह्मा (in sacrifices and Homas) and He is the most prominent among those possessing divine knowledge and the most important man of the whole universe. 27-28

स्रष्टस्त्वं सृज, तेन सृष्टमखिलं विष्णो जगत्पालय
त्वं सर्वाणि जगन्ति संहर हरेत्यैश्वर्ययोगान्मुहुः ।
स्वातन्त्र्याधिकवाग्भिरेवममरानाज्ञाप्य चैवंविधान्
यः स्वाभाविकशक्तिमानतितरामर्हः समर्थः प्रभुः ॥ २९ ॥

---

(1) सुखम् – क । मुखं is the reading in "ख" and it is adopted on the strength of the श्रुति - अग्निमुखा वै देवाः and रुद्रो वा एष यदग्निः. भट्टभास्कर is silent here.

(2) यद्वा दिव्यज्ञानोपपन्ना देवाः, तेषु भवः दैव्यः प्रथमः, दिव्यज्ञानोपपन्नानां मुख्य इति यावत् (भ – भा)

## Meaning of the word अधिवक्ता[1] -

He is the most efficient and deserving Lord possessing all powers which are inherent in Him, to command - "O creator! You proceed with your work of creation. O Visnu! protect the whole world created by Brahma, O Hara! You withdraw (destroy) all the worlds created" - Thus He often orders the respective gods through words spoken with full freedom owing to his possession of absolute authority. 29

अस्मद्धिंसनतत्परानरि[2]गणान् जातिं तथा रक्षसां
सर्वानाशु विनाशयन् मम पुरः प्रत्यक्षमाविर्भवन् ।
देवः सोम[3] अधिब्रवीतु कृपाया मा भैष्ट युष्मानहं
भीतिभ्यस्त्वधिपालयाम्यथ भवान् पात्वेवमस्मान् प्रभुः ॥३०॥

## Meaning of the remaining Mantra -

Quickly destroying the enemy regiments and the entire tribe of demons who torment us, may the God with Uma appear before my eyes and say with compassion - "Don't fear, I will save you from all dangers" and thus protect us. 30

## ध्यानम् -

शम्भुं दुःसहगर्भरोगहरणं रक्षाकरं सर्वथा
रक्षोभूतभयापहं प्रणमतां दीर्घायुरर्थप्रदम् ।
कण्वाराधितमिन्दुमौलिमनिशं व्यालोपवीतोज्वलं
प्रोद्यत्पावकवर्चसं त्रिणयनं कालारिमीशं भजे ॥ ३१ ॥

---

(1) अधिवक्ता = अधिवचनस्वभावः, सदा भक्तेभ्योऽतिवचनसमर्थो वा । यद्वा 'अर्हे कृत्यतृचश्च' इति तृच्, अधिवक्तुमर्हन् । अनीश्वरा अधिब्रुवन्तो हास्या भवेयुः (भ-भा)

(2) The enemies and demons mentioned here are mostly internal like काम, क्रोध, द्वेष etc.

(3) सोऽयम् - ख

## Dhyana :-

I worship the three-eyed Lord Śambhu, the subduer of the God of Death, the remover of all terrible diseases that affect pregnancy, the protector in all respects, the destroyer of all fears of demons and ghosts; one having the moon on his head and the snake for his sacred thead and who shines bright like the blazing fire. The Lord worshipped in this form by the sage Kanva will give long life and wealth to his devotees who prostrate at his feet. 31

असौ यस्ताम्रो अॅरुण उत बभ्रुस्सुमङ्गलॅः ।
ये चेमा ँ रुद्रा अभितॉ दिक्षु श्रिताः
सॅहस्रशोऽवैंषा ँ हेडॅ ईमहे ॥ ७ ॥

यःपूर्वाचलहेमरत्नशिखरप्रस्थोपलोपत्यका -
कान्तिव्याप्तिवशाद्रसातलतमःसंपर्कतो वाऽन्वहम् ।
उद्यत्कुङ्कुमपङ्कताम्र[1] उदितः सिन्दूरपूरारुण -
स्तप्तस्वर्णसुकान्तिरूर्ध्वमथ संरार्पन् क्रमाद् दृश्यते ॥३२ ॥
कल्याणैकनिधिः सतां स्वगमसावादित्यरूपः शिवो
ये तुल्याकृतिहेतिभूतिविभवा रुद्रेण रुद्राः परे ।
देवस्यानुचराः समस्तजगतां कर्मानुरूपं फलं
दातुं दिक्षु सहस्रशः क्षितिमिमां अध्यासते चाभितः ॥ ३३ ॥
कृत्यस्याकरणादकृत्यकरणादालस्यतः कामत -
स्तस्मात्पापमजस्रमार्जितमभूदस्माभिरज्ञैस्ततः ।

---

* हेडः क्रोध इति यास्कः । "हेड अनादरे" उभयमपि गृह्यते (भ-भा)

(1) पङ्कतोऽभ्र - क

तेषां तस्य महेश्वरस्य च विभोर्योऽस्मान् विहारादरः
(अस्मास्विहानादरः)
क्रोधश्चास्ति तमीश्वरस्तुतिनमस्कारैरपाकुर्महे ॥ ३४ ॥

## Mantra - 7

It is Rudra, the treasure of all auspicious things to the good people, who is seen in the form of the yonder sun rising red like saffron paste and gradually moving upward, first in deep red like Sindura, then in light red (orange) and then in the colour of molten gold. These colours are, as it were, due to his daily contact with the lustre of gold and gems on the summit and the valleys of the eastern mountain, or to his contact with the darkness of the nether world. We have, in our ignorance, constantly acquired sins by neglecting our duties on account of laziness and by performing prohibited actions out of greed. This has resulted in the wrath and indifference (towards us) of the Lord who is the treasure of auspicious things, himself assuming the form of the Sun, and also of the thousands of his lieutenants who are similar to him in appearance, weapons, ornaments and prowess and hence called Rudras. They are stationed all over the world to give the fruits of actions according to their nature. We pacify that indifference and anger of the Lord and his lieutenants by prayers and prostrations. 32 to 34.

---

(1) हेडः, क्रोधमनादरं च अवेमहे अपनयामः, स्तुतिभिर्नमस्कारैश्चेति शेषः । विहितातिक्रमनिमित्तमस्मद्विषयमनादरं, प्रतिषिद्धसेवानिमित्तं क्रोधं च, इत्युभयमपनयाम इति । (भ-भा) I have suggested the reading " अस्मास्विहानादरः' on the strength of the above interpretation of the word 'हेड' by भट्टभास्कर ।

असौ योऽवसर्पति नीलग्रीवो विलोहितः ।
उतैनं गोपा अदृशन्नदृशन्नुदहार्यः ।
उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः ॥ ८ ॥

क्ष्वेल[1]श्यामलकन्धरः स्फुरदुरुज्वालाग्निवर्णःशिव -
स्तेजोमण्डलमध्यवर्ति विलसन् मा[2]र्तण्डमध्ये वसन् ।
सायं किञ्चिदुदञ्चिताङ्कुरतमः सामर्थ्यली[3]नैर्यथा -
क्रान्ते ध्वान्तमपां च यञ्च परितः पङ्कप्रदेशान्तरे ॥ ३५ ॥
भूयिष्ठं ग्रसनक्षणे घृणिगणाक्रान्ताभ्रनीलानिलं (अरुणं)
बिभ्राणोऽस्तमय[4]न् विलोहितनिभः प्रातस्तथैवोदयन्
योऽसौ तिर्यगधश्च सर्पति जगद्यात्रां सदा निर्वहन्
दुर्ज्ञेयोऽपि तपः क्रियाभिरखिलैर्वेदैः श्रुतो मेधया ॥ ३६ ॥

## Mantra - 8. Meaning of असौ योऽवसर्पति नीलग्रीवो विलोहितः ।

Śiva with his neck black by the poison Kalakuta and his complexion bright like the blazing fire, occupies the centre of the bright Sun surrounded by a halo of great brilliance. This sun whose rays are made to vanish by the spreading

(1) नीलग्रीवः कालकूटविषालङ्कृतग्रीवः । विलोहितः - स्वयं विशेषेण लोहितः ज्वलत्पावकसंकाशः । (भ-भा)

(2) मार्ताण्डमध्यावसन् - क

(3) यद्वा नीलग्रीवलोहितपदे आदित्यविशेषणे एव । ग्रसत्युदकमिति ग्रीवा रश्मयः,ग्रसतेर्गिरतेर्वा शेवयह्वजिह्वत्यादिना वन्प्रत्ययो निपात्यते । उदयात्प्रभृत्युदकस्य ग्रहणादस्तं गच्छतो यस्य नीला रश्मयः तमोऽभिसंपर्कात् । यद्वा नीलग्रीवो नीलिमरश्मिः। विलोहितो विविधं लोहितः । उदयास्तमयकाले हि तमसः संपर्कात् लोहितमिव मण्डलं दृश्यते । (भ - भा)

(4) अस्तमये - क

darkness in the evening when they fall over the marshy places encircling water, bears, when mostly submerged, the reddish colour of the blue clouds spread over by his fiery rays. Bearing a reddish hue while setting and also while rising in the morning, He (the Sun) supports the daily life[1] of the world by moving up and accross (the Sky) and going down in the evening. Though He (the Lord within the Sun), cannot be comprehended by penance or religious rites, can be known by the intellect through the Vedas. 35, 36.

एनं तं भ[2]गवन्तमस्तमचिराद्यान्तं वनान्तोद्भवा
ग्रामप्राप्तिनिमित्तमेकमनसः पश्यन्ति गोपा अपि ।
अस्तं यास्यति भानुरन्धतमसं दृष्टिं पिधास्यत्यहो
स्वापश्चेदिह कुत्सयन्ति हि मृगा नो भक्षयिष्यन्त्यपि ॥ ३७ ॥

## Meaning of उतैनं गोपा अदृशन् -

Even the cow-herds (the most illiterate) in the forest look attentively at this Lord in the form of the Sun who is about to set and are overcome with anxiety to go to their villages before blinding darkness sets in, because if they are forced to sleep there itself, they might be troubled or even eaten away by wild beasts. 37.

---

(1) अथायं देवः उदयास्तमयाभ्यां लोकयात्रां वर्तयन् आबालगोपालं प्रसिद्धः । (भ-भा)

(2) रुद्रस्य मण्डलवर्तिस्वरूपधारणे प्रयोजनमुच्यते – उत अपि च गोपाः वेदशास्त्रसंस्कारहीनाः गोपाला अप्येनं मण्डलवर्तिनमादित्यरूपिणं रुद्रमदृशन् पश्यन्ति । उदहार्यः उदकानां हारिण्यो योषितोऽप्येनं पश्यन्ति । --- किञ्च भूतानि गोमहिषादयः सर्वेऽपि प्राणिनः पश्यन्ति । सर्वेषां दर्शनार्थमेव हि रुद्रस्यादित्यमूर्तिधारणम् कैलासादिवर्तिरुद्रस्य रूपं तु वेदशास्त्राभिज्ञैरेव दृश्यते नान्यैः (सायणः)

अम्भःकुम्भमिमं कदा निजगृहं नेष्याम इत्याकुलाः
स्वेदाम्भःकणसिक्तकञ्चुकसमालक्ष्याश्च[1] लज्जान्विताः
भ्रश्यद्भूषणजालमाकुलकचं व्यालोलहारं जवाद्
धावन्त्यः परिचारिकाश्च जनितानङ्गैरपाङ्गैर्मुहुः ॥ ३८ ॥

## Meaning of अदृशन् उदहार्यः -

·Servant-women carrying water (from the river to their homes) often look at him with bewitching glances being anxious as to when they could take home their water pots, and feeling shy as they run fast with their bodies visible owing to their jackets getting drenched with drops of perspiration, their ornaments dropping down and their pearl strings and hairs waving. 38

सन्ध्या[2]र्घ्योद्धरणाग्निहोत्रसमयैकाग्रचित्ता द्विजा -
श्चावासाभिमुखा[3] हि पक्षिपशवः कीटानि भूतान्यपि ।
सोऽयं नः सुखयत्वहर्निशमुपस्थानादिकालार्थिभिः
दृष्टोऽस्माभि[4]रपि प्रभुः प्रशमयन्नेनः कृपाम्भोनिधिः ॥ ३९ ॥

---

(1) चलच्चुचुकाः - ख

(2) अस्तं गच्छता भगवता जगतामुपकारान् प्रदर्शयितुं उपक्रमते ---- गोपाः पश्यन्ति - किं बहुना , विश्वान्यपि भूतानि एनमस्तं यान्तं पश्यन्ति मृगशकुनवराहादीनामपि निलयगमनादेस्तदधीनत्वात् । द्विजातयोऽप्यग्निहोत्रसन्ध्यावन्दनकालार्थिनो भगवन्तमस्तं यान्तं प्रतीक्षन्ते । (भ-भा)

(3) मुखानि - ख

(4) असौ सदा - क

## Meaning of उतैनं विश्वा भूतानि etc.

The Lord as such is watched by the twice-born who are time-conscious for offering Arghya in Sandhya prayer and for the performance of Agnihotra (daily fire worship). Even the birds, cattle, insects and all creatures look at him seeking for time to resort to their abodes. Seen by us also to know the time for Sandhyopasana and other prayers, may this compassionate Lord destroy our sins and make us happy for ever. 39

## ध्यानम् -

यं ध्यायन्निह वेदपारगकुले जातिस्मरो जायते
रुद्रं तं वरदं सुवृष्टिफलदं[1] श्रीकश्यपाराधितम् ।
भास्वन्मण्डलगं हिरण्मयतनुं चण्डप्रभामण्डलं
साम्बं स्मेरमुखाम्बुजं मुनिगणैरासेव्यमानं भजे ॥ ४० ॥

## Dhyana :-

I propitiate Rudra associated with the universal Mother, the giver of boons and plenty of rain, dweller in the disc of the Sun, possessed of a golden body, encircled by a bright halo and having a smiling lotus-like face. The devotee meditating on Him who is worshipped by Kaśyapa and is attended upon by groups of ascetics, gets birth in the family of vedic scholars gifted with the power to recollect the previous[2] birth (जातिस्मर). 40

(1) सुपुष्टि - ख । भट्टभास्कर reads सुवृष्टि and explains - "एताभ्यां (मन्त्राभ्यां) अनावृष्ट्यां सत्यां वृष्ट्यर्थं पुरश्चरणं कार्यम् "।

(2) जपापुष्पाणां मध्वक्तानामेकविंशतिसहस्रं जुहुयात् । सवितुः प्रसादात् जातिस्मरत्वं लभते, चतुर्वेदिकुले जनिः"। (भ-भा)

नमो॑ अस्तु नील॑ग्रीवाय सहस्राक्षाय॑ मीढुषे॑ ।
अथो॒ ये अ॑स्य सत्वा॑नोऽहं तेभ्यो॑ऽकरं नम॑ः ॥

नीलात्युज्वलकन्धराय च सहस्राक्षात्मने वृष्टिभिः
पर्जन्यात्मतया भुवं च परितो सेक्त्रे[1] तथा योनिषु ।
गर्भाणां पुरुषात्मना च विविधैर्बीजैर्विधात्रे नमो
रुद्रायास्तु नमस्करोम्यथ भटा ये चास्य तेभ्यो नमः ॥ ४१ ॥

## Mantra - 9

Our salutations to Rudra with a bright blue neck who, assuming the form of Indra (one with thousand eyes), drenches (and makes fertile) the earth with rains through his own form as cloud and, in the form of the supreme God (Purusha), deposits in the wombs of the earth his own seeds of various kinds to cause pregnancy (to yield plants, fruits, minerals and other things). I also salute his soldiers (in the form of his प्रमथ[2] गणाः) 41

## ध्यानम् -

सन्तानैकफलार्थिनां प्रणमतां सन्तानरूपं प्रभुं
स्वात्मानं हृदि भावयन्तमनिशं शम्भुं कृपाम्भोनिधिम्
कान्तं शारदचन्द्रकान्ति नि[3]तरां (वदनं) शान्तं शिवं शीतलं
साम्बं दिव्यवपुर्दधानममलं सिंहासनस्थं भजे ॥ ४२ ॥

---

(1) नेत्रे - क । मीढुषे वृष्टिद्वारेण भुवः सेक्त्रे । जगद्योनौ वा स्ववीर्यस्य सेक्त्रे पुरुषरूपेण वा गर्भाणामाधात्रे । 'मिह सेचने । दाश्वान् साह्वान् मीढ्वांश्च इति निपातः '। (भ-भा)

(2) सत्वानः महान्तः प्रमथगणाः (भ-भा)
सत्वानो भृत्यरूपाः प्राणिनः । सायणः

(3) शारदचन्द्रकान्तिवदनं - one समसतपदम् is suggested.

## Dhyana :-

I worship Lord Śambhu associated with Amba, who is an ocean of compassion, always meditating on his own self, seated on a throne, assuming a pure and divine body having a face shining like the autumnal moon, calm, cool and auspicious. He blesses the devotees who seek the only favour of progeny by himself becoming their offspring. 42

प्रमु॑ञ्च धन्व॑न॒स्त्वमु॒भयो॒रार्त्नि॑यो॒र्ज्याम् ।

याश्च॑ ते॒ हस्त॒ इष॑वः॒ परा॒ ता भ॑गवो वप ॥ १० ॥

संरम्भस्त्रिपुरेषु[1] दुःसहतरो यःपूर्वमासीद् ध्रुवं
स्यादद्यापि स एव सेवकजनेष्वस्मासु दीनेष्वपि ।
विद्यैश्वर्ययशःश्रियां च भगवंस्ते ज्ञानवैराग्ययोः ।
दाक्षिण्यैकतनोर्दयामयतनोः पाल्येष्वयुक्तो हि सः ॥ ४३ ॥

## Mantra - 10

The terrible fury directed by you long ago towards Tripura might be existing even now. But, O Lord! considering your learning, supreme authority, fame, wealth or powers, knowledge and detachment, it is not proper on your part, the most courteous and compassionate as you are, to direct the same fury towards us, your humble servants deserving protection. 43

तस्माज्ज्यामिह तां प्रमुञ्च[2] धनुषः कोट्योर्द्वयोर्या चिरं
बद्धा याश्च तवेषवः करतले तिष्ठन्ति ताः प्राणिनाम् ।
संहर्त्रीरुपसंहरन्नभिमुखीकुर्वन्तु नास्मान् यथा
तूणीरेषु तिरोहितान् कुरु तथा देवेश तुभ्यं नमः ॥ ४४ ॥

---

(1) अत्र नमस्तेरुद्रेत्यारभ्य नवभिर्मन्त्रैः क्रुद्धं देवं प्रसाद्य अतःपरं तस्योपसंहारकारणान्युपसंहारयितुं प्रक्रमते । (2) (भ-भा) प्रमुच्य - स

Note - The three Mantras from 10 to 12 are treated as a single unit with a common Dhyana sloka. The same is the case with Mantras 13 to 15 also.

Therefore, O Lord of the Gods! Release the string which is fastened to both ends of your bow, withdraw the arrows held in your hand which destroy the living beings and deposit them in your quivers in such a way that they are not directed against us who offer salutations to you. 44

अवतत्य धनुस्त्वँ सहस्राक्ष शतेषुधे

निशीर्य शल्यानां मुखा शिवो नः सुमना भव ॥११॥

देवानेकशतेषुधिव्रज सहस्राक्ष त्वमेव[1] धनुः
कृत्वा विज्यमिदं मुखानि शिखिनां चैवं विशीर्णानि ते
निःशेषं नितरां विधाय कृपयास्माकं प्रसादार्थिनां
सद्यः शान्तमनाः शिवो भव सहस्वाद्यापराधान् बहून् ॥

## Mantra - 11

O Lord with thousand eyes and hundreds of quivers! Having thus removed the string from the bow and made the points of the arrows blunt, you at once become Śiva (aupiecious one) .with a calm and serene mind towards us who seek your favour, and forgive us for our numerous omissions and commissions.

विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ उत

अनेशन्नस्येषव आभुरस्य निषङ्गथिः ॥ १२ ॥

सुप्रीतस्य कपर्दिनोऽस्त्विह पिनाकाख्यं धनुः सज्यम -
प्यद्यास्मत्कुशलाय विज्यमिषुधिश्चायं पुरारेः पुरा ।
बाणैः पूर्णतरोऽपि वीतविशिखो भूयात्तदीयाश्च या
देवस्यैव वरेषवो व्यवहितास्ताः[2] सन्तु दीनाः[3]क्रमात् ॥ ४६ ॥

---

(1) स्वमेवं - स्व
(2) अस्य इषुधेरिषवोऽनेशन् यत्रक्वापीषुधेरन्यत्र अदृश्यास्तिष्ठन्तु (भ-भा)
(3) अस्य रुद्रस्य इषवः बाणाः इषुधौ प्रक्षिप्ताः अनेशन् वेद्धुमसमर्थाः भवन्तु - (सायणः)

## Mantra - 12

May the bow Pinaka of the Lord with matted hairs (Kapardi) who is now pleased, have the string removed for our welfare. His quiver too, which was full while destroying the cities, may now be made empty. His excellent arrows may also be placed somewhere far away so that they may become powerless to strike. 46

तीक्ष्णारोऽपि महासिरस्य भजतां भक्तेषु मन्दारतां
कोशः[1] खड्गसहायवानपि विनाभूतोऽस्तु तेनाधुना ।
एवं शान्तमनाः प्रशान्तविविधानेकायुधः सन्ततं
भक्तान्नःशरणागतान् करुणया पायादपायाच्छिवः ॥ ४७ ॥

May his sharp sword turn soft-edged towards his devotees; may the sheath usually containing the sword, now become empty. Thus making the various weapons quiet, may Śiva with a tranquil and compassionate heart save us, his devotees seeking refuge, from dangers.

ध्यानम् -

युद्धे वैरिभयापहं प्रणमतां श्रीरुद्रमाराधितं
देवं नारदनामकेन मुनिना नानायुधालङ्कृतम् ।
उद्यद्भास्करकोटिदीधितितनुं दी[2]प्तोत्तमाङ्गोज्वलं
कान्तं भीषणभोगिभूषणमहं ध्यायामि भक्तेष्टदम् ॥ ४८ ॥

---

(1) नितरां नियमेन वा कोशेन सज्जत इति निषङ्गः खड्गः स निधीयते यत्र स निषङ्गधिः, खड्गकोशः । परोक्षवृत्या धकारस्य थकारः । आ ईषद्भवतीत्याभुः । किञ्चिन्न्यूनं भवनमाभवनम् - तच्च खड्गेन विना सत्तामात्रेणावस्थानम् । निषङ्गधारणस्वभावस्य खड्गकोशस्य निषङ्गेण सहावस्थाने पुष्कलभावः, तेन विनावस्थानमाभवनमिति । तेन सोऽपि खड्गरहितो वर्ततामिति भावः । (भ - भा)

(2) आदीप्तदहनमूर्धजम् - (भ-भा)

## Dhyana :- Common to Mantras 10 to 12.

I meditate on Rudra possessing the brilliance of crores of suns rising together, having the crescent moon shining bright on his blazing head, adorned with various weapons and having the fierce serpents for his ornaments. The Lord worshipped in this form by sage Narada is the remover of fear from the enemies in battle and the bestower of the wishes of his devotees. 48

या ते॑ हे॒तिर्मी॑ढुष्टम॒ हस्ते॑ ब॒भूव॑ ते॒ धनु॑ः ।
त॒यास्मान् वि॒श्वत॒स्त्वम॑य॒क्ष्मया॒ परि॑ब्भुज ॥ १३ ॥

हे मीढुष्टम रुद्र हेतिरधुना हस्ते तवास्ते धनु -
र्नाम्नी या प्रणतार्तिदुःखभयरोगैकापहन्त्र्या तया ।
अस्मान्पुत्रकलत्रमित्रसहितान्सर्वान् प्रपन्नान् सदा
सर्वस्माद्दुरिताच्च रक्ष भगवन् दीनान् दयाम्भोनिधे ॥ ४९ ॥

## Mantra - 13

O Lord Rudra, the foremost among the givers of wishes and an ocean of compassion! with that weapon in your hand, the bow that removes the afflictions, sorrows, fears and diseases of those who salute you, please save us, the pitiable creatures who always seek your protection, along with our children, wives and kinsmen, from all our sins. 49

नम॑स्ते अ॒स्त्वायु॑धा॒याना॑तताय धृ॒ष्णवे॑ ।
उ॒भाभ्या॑मु॒त ते॒ नमो॑ बा॒हुभ्यां॒ तव॒ धन्व॑ने ॥ १४ ॥

स्वामिन् रुद्र नमोऽस्तु देव धनुषे चानाततज्याय ते -
चोद्युक्ताय शराय चोद्यतगदाचक्रादिसंघाय च ।
दुष्टान् धर्षयते दृढाय विविधायैवंविधायायुध -
स्तोमायाद्य नमोऽस्तु तेऽद्य (थ) भगवन् याभ्यां रिपून् विद्धयसि ॥ ५० ॥
बाहुभ्यां बिभिमो वयं तव धनुर्बाणोद्यताभ्यां ततः
सत्स्वन्येषु महाभुजेष्वपि मुहुस्ताभ्यां भुजाभ्यां[1] नमः ।
यद्वा दक्षिणवामबाहुनिवहाभ्यां ते नमः कृत्स्नश -
स्तस्मै चोत्तमसायकाय धनुषे तस्मै नमः कुर्महे ॥ ५१ ॥

## Mantra - 14

O Lord Rudra, our salutations to you, to your unstrung bow and to your collection of various weapons such as arrows, clubs, discus, sword etc. which are strong and are capable of destroying the wicked. Also our salutations to your two hands with which you strike the enemies. Though you possess other powerful hands, we are afraid of those two hands which wield the bow and arrow and hence our repeated salutations to them. Or, let our salutations be to the two sets of many hands on your right and left. We also salute your excellent arrow and the bow. 50-51

परि॑ते॒ धन्व॑नो हे॒तिर॒स्मान् वृ॑णक्तु वि॒श्वतः॑ ।
अथो॒ य इ॑षु॒धिस्तवा॒रे अ॒स्मन्नि धे॑हि॒ तम् ॥ १५ ॥

स्वामिन्नद्य वयं पुनः पुनरिदं चाशास्यमाशास्महे
यः पार्श्वेऽस्ति तवेषुधिस्त इषवो यास्ताश्च दूरे पुनः

(1) उभाभ्यां - ख

व्यूहे वैरिजनस्य पातय तथा हिंसापि ते धन्वनः
तत्रैवास्त्विह पुत्रपौत्रसहितान् पुष्णातु नः सर्वतः ॥ ५२ ॥

## Mantra - 15

O Lord! we repeatedly express our worthy wish and pray to you that your quiver and arrows, far and near, may be directed against the host of our enemies. Your bow too may be employed only to destroy them and may it sustain us, along with our children and grand-children. 52

## ध्यानम् -

स्वात्मानं हृदि भावयन्तमनिशं रुद्रं मुहुर्ध्यायतां
युद्धे सर्वरिपुप्रणाशनमरिस्थानैकविध्वंसनम् ।
नम्राशेषसुरेन्द्रमौलिविलसत्पादाम्बुजं कारणं
सर्वेषां जगतां पिनाकिनमहं ध्यायामि साम्बं प्रभुम् ॥ ५३ ॥

## Dhyana for Mantras 13 to 15 -

I always contemplate on Lord Rudra accompanied by Amba, the Cause (source) of the universe and the wielder of the (bow) Pinaka, who constantly meditates on his own self within his heart and whose lotus-like feet glitter with the crowns of Gods led by Indra when they prostrate (before Him). He destroys in battle, the entire hosts of enemies and the enemy camps of those who frequently meditate on him. 53

चन्द्रोत्तंसमचिन्त्यमक्षरमजं संसारदुःखापहं
मध्ये शुद्धसुधांशुवार्धिशयनं तं सस्मितं चिन्तये ।
चारुस्मेरमुखं सुमौक्तिकनिभं मध्ये सुधामण्डल -
स्यासीनं जगदेकरक्षणपरं ध्यायामि साम्बं सदा ॥ ५४ ॥

## इति प्रथमोऽनुवाकः

**Dhyana for the whole Anuvaka -**

I always contemplate on the lord Rudra associated with Amba, wearing the moon as his crest-jewel, having a smiling face, spotless like pearl, and reposing in the ocean of pure rays of nectar (or sitting in the centre of the region of nectar). I always meditate on him who has neither birth nor death and whose nature cannot be comprehended, who has dedicated himself for the sole task of protecting the world and eradicating the miseries of worldly life. 54

## End of Anuvaka - 1

(नमस्ते अस्तु भगवन् विश्वेश्वराय
महादेवाय त्र्यम्बकाय त्रिपुरान्तकाय

---

(1) This sentence with eleven epithets of Śiva in the Dative case with नमः शब्द in the beginning and the end of the sentence does not form part of Sri Rudra and is not found anywhere in the तैत्तिरीयसंहिता or ब्राह्मणम् । Yet it has now become the fashion to recite this unauthorised line by most of the South Indian Tamil Brahmin priests and their disciples between the first and second Anuvakas of Śri Rudram, either due to ignorance or unmindful of the fact that not even a single syllable or syllabic instant (वर्ण or मात्रा) should be added to or omitted from the Vedic text at one's own free will. It is a sin to break the uninterrupted flow of the Vedic sound in the middle by adding such unauthorised sounds. सायण and भट्टभास्कर were unaware of the existence of such a line and it is presumed Skanda Deva too was not aware of the same. This line along with the verse giving a summary of it, seems to be an interpolation. As already stated, verses not concerned with श्रीरुद्र are not translated and numbered here. (Editor).

त्रिकालाग्निकालाय कालाग्निरुद्राय
नीलकण्ठाय मृत्युञ्जयाय सर्वेश्वराय
सदाशिवाय श्रीमन्महादेवाय नमः)

तुभ्यं देव सदा नमोऽस्तु भगवन् विश्वेश्वराय स्फुर -
द्वह्न्यर्केन्दुदृशे पुरत्रयभिदे कालाग्निरुद्राय च ।
क्ष्वेलश्यामलकन्धराय च महादेवाय सर्वेश्वरा -
येशानाय सदाशिवाय महते देवाय शश्वन्नमः ।।

श्रीस्कन्द उवाच -

श्रीरुद्रादिपदार्थबोधनशिवध्यानानुसन्धानवि -
ज्ञानानन्दविधानपावनतमस्वान्तेन कान्तेन च ।
विश्वेशस्मरणादरेण वशिना ज्ञेयोऽर्थ एष क्रमा -
च्छान्तेनैव विभूतिभूषणमहालिङ्गार्चकेन त्वया ।।

इति शिवरहस्ये द्वादशे अंशे षड्विंशोऽध्यायः ।।

# अथ शिवरहस्ये सप्तविंशोऽध्यायः

## श्रीस्कन्द उवाच -

स्वामी[1] त्वं स्वमिदं जगत्तदधुना शक्तोऽपि सन् मन्युना
संहर्तुं कृपया विभूतिविभवैर्व्याप्योग्रशान्तादिभिः ।
कुर्वन्निग्रहमप्यनुग्रहमवस्येतच्छिवत्वं प्रभो
तस्मै तेऽस्तु नमो हिरण्यपतये तुभ्यं हिरण्यात्मने ॥ १ ॥

## Skanda said - (Introduction to Anuvaka 2)

O Lord! You are the master of this world which is your own self or property. Although you are capable of withdrawing (destroying) it with your power called Manyu (anger) you protect it out of compassion by pervading it with your many fierce and benevolent forms and by awarding punishment and boons (to the guilty and the pious respectively). Thus you become Śiva, the benevolent and auspicious Lord. Our prostrations to you, the lord of wealth possessing a golden form. 1

---

(1) द्वितीयाद्यनुवाकानामामुखत्वेन भट्टभास्करः प्राह । अत उर्ध्वं अष्टभिरनुवाकैः तं(रुद्रं) वैश्वरूप्येण स्तुत्वा नमस्कर्तुमारभते । तत्र त्रिष्वनुवाकेषु नमस्कारादि नमस्कारान्तमेकं यजुरिति शाकपूर्णिः । नमस्काराद्येकं यजुर्नमस्कारान्तमेकं यजुरिति यास्कः । अष्टावनुवाकाः अष्ट यजूंषि इति काशकृत्स्नः" । ---- तत्रादौ तव स्वभूतमिदं विश्वं त्वमस्य स्वामीति, न कश्चिदपि स्वामी स्वं हिनस्तीति प्रदर्शयितुं देवस्य विश्वपतित्वं प्रतिपादयति । प्राधान्याच्च प्रथमं द्रव्यविषयमाधिपत्यं प्रतिपाद्यते नमो हिरण्यबाहवे ---- इति । (भ-भा)

<u>अत्र सायणः</u> - प्रथमानुवाके भगवतो रुद्रस्य या प्रधानभूता तनुरिषुधनुर्हस्ता तां वहुधा प्रसाद्य, तस्य ये लीलाविग्रहाः जगन्निर्वाहहेतवः तेऽष्टभिरनुवाकैः प्रसाद्यन्ते । तेष्वनुवाकेष सर्वाण्यपि यजूंषि । तान्यपि द्विविधानि । उभयतो नमस्काराण्यन्यतरनमस्काराणि च । तत्र त्रिष्वनुवाकेषु नमस्कारादिकं नमस्कारान्तमेकैकं यजुः । इतरेषु पञ्चस्वनुवाकेषु नमस्कारादिकमेकैकं यजुः । तत्र द्वितीयानुवाके त्रयोदश यजूंषि ।

# अथ द्वितीयोऽनुवाकः

नमो॒ हिर॑ण्यबाहवे सेना॒न्ये॑ दि॒शां च॒ पत॑ये॒ नमः॑१

अङ्गं यस्य हिरण्यभूषणगणैर्व्याप्तं[1] हिरण्यप्रभं
बाहू हृद्यतमौ[2] हि तौ च रमणीयौ भक्तिभाजां सताम्
पुण्यापुण्यविमिश्रकर्मफलभोक्तॄणां सुराणां नृणां ।
रक्षो यक्षपिशचकिन्नरफणीन्द्राणां पितॄणामपि ॥ २ ॥

संधातान् विविधान् विधाय बहुधा सेनाःस्वकीयाः स्वयं
स्वामित्वेन च संस्थितो नयति ताः बह्वीर्गतीर्यः सदा
यश्चेन्द्रादिदिगीश्वरात्मकतया सर्वा दिशः पालयन्
आदित्यात्मतयोदयास्तमयसञ्चारैर्दिशः कल्पयन् ॥ ३ ॥
प्रत्यक्षः समुपास्यमूर्तिरिह यस्तेजोनिधिर्दृश्यते
तस्मै तेऽस्तु नमो -

## Anuvaka - 2

### Mantra - 1

Our prostrations to you whose body is adorned all over with gold ornaments and is golden in complexion, whose hands are pleasing and charming to the devotees and good people and who, having made the various groups of gods, men, demons, spirits, Kinnaras, ghosts, Nagas and manes (Pitṛs) who experience the result of their mixed deeds of Puṇya and Pāpa, your own different kinds of armies; yourself remain as their commander and lead them to various destinations (in accordance to thier Karma). We also salute

---

(1) दीप्तम् - ख ।

(2) हितं च रमणीयं च हिरण्यं, पृषोदरादिः । हृदयरमणीयमिति वा - (भ-भा)

you who guard all the quarters through your manifestations as Indra, Agni etc.; who, in the form of the sun, demarcate the directions such as the east, west etc. by rising, setting and moving (across the sky); and who appear before the eyes as the powerful luminary (sun), which form is best suited for meditation. 2-3

नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यः पशू॒नां पत॑ये॒ नम॑ः २

– नमः क्षितितले रुद्रास्त्वदंशाः परे ।
ये वृक्षाकृतयो वसन्ति विविधा वृक्षेषु वा संस्थिताः
ये ब्रह्मादि[1]पिपीलिकान्तविविधप्राण्यात्मकाश्चेतनाः ॥ ४ ॥
भोगान्ते निजकर्मणो नियतिना[2] (?) वाकृष्यमाना मुहुः
ये रुद्रा हरिताभकेशनिवहास्तेभ्योऽपि योऽसौ पशून् ।
ब्रह्मादीनपि[3] पाति तैश्च रमते तेषां प्रधानः पतिः
तस्मै विश्वभुजे नमो –

Prostrations to those Rudras who are your own parts on earth in the shape of trees; or, who live on trees (as presiding deities) with the dark green leaves as their thick locks of hairs; or to your own manifestations in the form of the entire creation of living beings from the creator (ब्रह्मा) down to the ants which are destroyed by destiny at the end of reaping the furits of their previous actions (कर्म). Also our salutations to you who enjoy and protect the whole universe including the ignorant creatures (पशून्) from Brahman downwards by sporting with them and lording over them as their master. 4-5

---

(1) वृक्षवद्वृक्षाः ब्रह्मादिपिपीलिकान्ताः ब्रह्माण्डक्षितिप्ररूढाः सर्व एव वृक्षाः, वृश्चतेः छेदनकर्मणः सक्प्रत्यये वृक्षाः विनाशवन्त इति यावत् – (भ – भा)

(2) नियतिशब्द being स्त्रीलिङ्ग, the reading should be नियत्या in which case there is वृत्तभङ्ग । It may be "नियतितः" इति तसिः ।

(3) सर्वदा यत्पशून् पाति तैश्च यद्रमते पुनः ।
तेषामधिपतित्वाच्च तस्मात्पशुपतिः स्मृतः ॥ (महाभारते) – भ-भा

नमः सस्पिञ्जराय त्विषीमते पथीनां पतये नमः ३

\- नमः इदं प्रत्यग्रघासाङ्कुर-
श्रेणीपिञ्जरमूर्तयेऽतिविमलज्योतिर्मयाङ्गाय ते ।। ५ ।।
चिद्[1]रूपाय चिदात्मने स्वयमभिव्यक्ताय, ये लौकिका
मार्गा येऽपि च वैदिका बहुविधा धूमार्चिराद्या अपि ।
तादृङ्मार्गविदश्च ये क्रतुषु ये त्वां द्रष्टृभावं गतं (त्वद्द्रष्टृभावं गताः)
एते[3]षां पतये नमो -

Our salutations to you who are reddish yellow like rows of tender grass-shoots, whose body is spotless and brilliant and who are pure consciousness or knowledge that is self-luminous. We also bow to you, the master of those who know the various worldly paths and the very many procedures outlined in the Vedas, or the paths known as Dhuma and Archis, or the master of those like Brahma and such others who could see you in sacrifices (as the guardian deity). 5-6.

नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमः ४

\- नम इदं बभ्रुत्विषे सर्वदा
रक्षित्रे वृ[4]षभस्य दिव्यवृषभारूढाय पापात्मनां

(1) त्विषीमते, त्विषिर्दीप्तिः, अतिशयेन तद्वते तेजिष्ठवपुषे, स्वयं प्रकाशाय ज्ञानरूपाय वा

(2) पथीनां पतये - सन्मार्गाणां लौकिकानां वैदिकानां च प्रवर्तयित्रे । यद्वा अर्चिरादिमार्गेण पतये अतिवाहयित्रे । यद्वा पथिमन्तः प्रथमे द्रष्टारः ब्रह्मादयः तेषां स्वामिने । पथिशब्दान्मत्वर्थीय ईकारः (भ-भा)

(3) ये तेषाम् - क ।

(4) बिभर्ति रुद्रमिति बभ्रुर्वृषभः, स एव बभ्लुः रलयोर्भेदाभावः । तस्मिन् शेते तिष्ठति इति बभ्लुशः (सायणः) विभर्तीति बभ्रुर्वृषभः, तद्वते, यद्वा बभ्लौ शेते इति (भ - भा)

क्षुत्तृ[1]ष्णापचयामयैश्च विविधैराविध्यते यानि च ।
रक्षांस्यध्वरभक्षकाणि सततं तेषां च हन्त्रे मुहुः
सोमा[2]यौषधिसम्भवैरविफलैः सञ्जीवयित्रे नृणाम्
अन्नानां पतये नमो - ॥ ७ ॥

Our prostrations to you with a reddish yellow complexion, the protector and rider of the divine bull and the one who torment the sinners with hunger, thirst, fatigue, diseases etc., or destroy the demons who snatch and eat the offerings in sacrifices. We also bow to you, who in the form of Soma creeper or the moon protect the people with supplies of effective medicinal herbs and who safeguard the varieties of food. 7

नमो॒ हरि॑केशायोपवी॒तिने॑ पु॒ष्टा॒नां पत॑ये॒ नम॑ः ५

- नमः इदं ते नित्ययूने सदा
नीलात्युज्वलमूर्धजाय विलसद्यज्ञोपवीताय ते
पु[3]ष्टानां च सतां शमादिसुगुणैर्नाथाय वाचो धियः
कायस्येन्द्रियसञ्चयस्य च गृहक्षेत्रादिकानां तथा ॥ ८ ॥
ग्रामाणां धनधान्ययोरपि पशुव्यूहस्य सत्सन्ततेः
धर्मस्येति च पुष्टयो दशविधा याः स्युर्दशानामपि ।
एतासां पतये नमो -

---

(1) विविधं विध्यति बुभुक्षादिरूपेण पीडयतीति विव्याधी , तस्मै --- (भ-भा)

(2) अन्नानां पतये - अदनीयानामोषधीनां स्वामिने (भ-भा)
सोमाय - अन्ननां ओषधीनां पतये सोमलतारूपायेत्यर्थःअथवा चन्द्ररूपाय ।

(3) पुष्टानां परिपूर्णगुणानां स्वामिने । यद्वा पुष्टयः पुष्टानि । दशपुष्टयः सन्ति - वाक्पुष्टिर्ज्ञानपुष्टिः शरीरेन्द्रियपुष्टिः, धनधान्यपुष्टिः प्रजापुष्टिः, पशुपुष्टिः, ग्रामपुष्टिः धर्मपुष्टिरणिमादिपुष्टिरिति - (भ - भा)

Our salutations to you, the eternal youth having shining dark hairs and attractive Yajnopavitam. We also salute you the protector of good men possessed of sef-control and other virutes, and also the protector of the ten kinds of wealth promoting (पुष्टि) growth or welfare which are - (1) speech, (2) intellect, (3) body, (4) senses, (5) house, fields etc. (6) villages, (7) riches and grains, (8) cattle, (9) good progeny and (10) Dharma. 8-9

नमो॑ भ॒वस्य॑ हे॒त्यै जग॑तां॒ पत॑ये॒ नम॑ः ६

- नमः इदं संसारवृक्षच्छिदे[1]
हेत्यै संसृतिजन्यदुस्सहमहाहिंसास्वरूपाय[2] च ॥ ९ ॥
लोकानां पतयेऽतिदुःसहमहासंसारखिन्नान् जनान्
कृत्वा तानथ रक्षते करुणया श्रीपञ्चवक्त्रात्मने[3]
देवेशाय नमो -

Our salutations to you, the weapon for cutting the tree of wordly existence; or the one whose forms are the unbearable afflictions born of the cycle of births and deaths (संसृति). We also bow to you, the Lord of the gods, having five faces (Panchavaktra) who make the people tired of the torturing woes of worldly life and ultimatley save them out of compassion. 9-10.

---

(1) भवः संसारः, हेतिरायुधं संसारस्य छेत्रे, यद्वा भवस्य या हेतिः संसारनिमित्ता हिंसा तस्य तदात्मने नमः (भ - भा) ।

(2) संसारे प्राणिनः खेदयति, खिन्नांश्च रक्षतीति समुदायार्थः (भ - भा) ।

(3) कोचिदाहुः- नमो हिरण्यबाहव इत्यादिभिः पञ्चभिर्मन्त्रैः पञ्च ब्रह्माणि पृथग्वर्णानि प्रतिपाद्य ततःषष्ठेनानेन संसारस्योच्छेत्ता पञ्चवक्त्रो देवः प्रतिपाद्यत इति (भ - भा)

**नमॊ रु॒द्राया॑तता॒विने॒ क्षेत्रा॑णां॒ पत॑ये॒ नम॑ः ७**

\- नमो भगवते रुद्राय सज्यं[1] धनु

शश्वद्धारयते समस्तमवते तेनैव विश्वं सदा ॥ १० ॥

हृद्देशे[2] निवसन्नवन् वपुरिदं क्षेत्रं स्वया मायया ।

यन्त्री यन्त्रसमास्थितानिव सदा जीवान् मुहुर्भ्रामयन्[3]

क्षेत्रज्ञः स्वयमेव पश्यति शृणोत्युज्जीवति व्याहर -

त्यालेह्यं सकलं च वेत्ति सुखदं यत्साधनं केवलम् ॥ ११ ॥

आविर्भूय भुवि स्वयं वसति यः क्षेत्रेषु लिङ्गात्मना

क्षेत्राणि स्वयमेव रक्षति सदा यः क्षेत्रपालात्मना ।

क्षेत्राणां पतये महेश भवते तस्मै नमः -

Our salutations to you, O Rudra! who wield the strung bow and with that protect the entire universe. Prostrations to you who, residing in the heart, protect this body with your Māya, or residing within , you animate the senses with your Māya just as one operating a machine also animates the things in that machine. Being the soul within the body, you see, hear, animate, talk, taste and understand everything that is to be tasted and is the means for happiness. Manifesting on the earth in the form of Linga, you reside in sacred places and temples. As the guardian of the lands you always protect the fields. O Lord! we bow to you, the Lord of the Kṣetras - the bodies, sacred places, temples, lands and fields. 11-12

---

(1) आततेन विस्तारितेन धनुषा अवति रक्षति इत्याततावी (सायणः) ।

(2) क्षेत्राणां शरीराणां रक्षकाय स्वामिने वा - तथा हि - ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया इति । अविमुक्तादीनां पुण्यक्षेत्रादीनां वा स्वामिने, पुण्यक्षेत्रपालात्मने वा - (भ - भा)

(3) भावयन् - क

नमॅःसूतायाहॅन्त्याय् वनॅानां पतॅये नमॅः ८

- ते नमः

सूता[1]यास्य महारथस्य जगदाधारस्य सूत्रात्मना ॥ १२ ॥
कल्पादौ च महामुनीन् प्रति पुराणानां प्रवक्त्रेऽध्वरे
सोमायाभिषुतस्य (ताय) केवलमहंकारे निरूढा[2]य च ।
भूतं भावि च वर्तमानमहमित्याकारिका या परा -
हन्ता तत्र भवाय केवलमहन्तव्याय सत्वा[3]त्मने । १३
सर्वेषां वनदेवतात्मकतया गोप्त्रे वनानां नमः

Our prostrations to you, the controller of this great chariot of the universe and its supporter through your subtle all - pervading form (Sutratma), or the reciter of the Puranas to the sages at the beginning of the Kalpa (in the form of the Divine fish), or the Soma creeper crushed and offered in sacrifices. We also offer our salutations to you who are the direct connotation of the word I (अहम्) i.e. Ego; or one born out of the feeling that I am the past, present and future and everything, or one, being mighty (सत्वात्मा), cannot be hurt and who are the protector of the forests as their presiding deity. 12-13

नमो रोहॅिताय स्थपतॅये वृक्षाणां पतॅये नमॅ ९

तुभ्यं देव नमोऽस्तु लोहितनिभायाशेषवा[4]गात्मनां
शब्दानां प्रथमप्रवर्तकतया लोके हितायाभितः ।

---

(1) सूतः सारथिः नियन्ता जगद्यन्त्रात्मनो रथस्य नियन्तृत्वेन । यद्वा सूतः पुराणानां वक्ता, तदधिष्ठाने युगादौ । यद्वा सुताय अभिषुतसोमात्मने । छान्दसं दीर्घत्वम् - (भ-भा)

(2) अहन्त्याय अहन्तव्यायात्मज्योतिषे । यद्वा अहमेव सर्वमिति भावो अहन्ता तत्र भवः अहन्त्यः 'भावे छन्दसि' इति यत् । यद्वा अहमिति निपातः, अव्ययात् त्यप् अहंकारे निरूढः । - (भ - भा)

(3) सत्वात्मने - स्व = Being the one reality.

(4) कश्चिदाह - रोशब्दो वाचकरूपः, तस्मै हिताय तत्र वा निहिताय (भ - भा)

स्थित्वा[1] पालयते निषादपतये खड्गैकधृग्बाहवे ॥ १४ ॥
वृक्षाणां पतये नमो -

Our salutations to you, the red coloured one, or the benefactor of humanity by kindling the faculty of expressing thoughts through articulate sound for the first time, (i.e. the originator of human speech or language). Also our prostrations to you who protect remaining everywhere, who are the leader of the forest tribe wielding a sword and also the lord of the woods. 14

नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमः १०

- नम इदं मन्त्रैरुपास्याय ते
वेद्यायोपनिषद्[2]रहस्यवचनैर्गीताय[3] चिद्रूपिणे ।
साक्षित्वेन च कर्मणामपि परिच्छेत्रे वणिग्वन्[4]नृणां ।
वाण्या वाच्य[5]तया पुनः पुनरभिव्यक्ताय च स्वामिने[6] ॥ १५ ॥
कक्षाणां गिरिगुल्म[7]गह्वरनदीकुण्डात्मकानां सदा
गोप्त्रे तेषु च सर्वतो निवसतां नानाविधप्राणिनाम् ।
अध्यक्षाय वनस्य धर्मगहनत्रात्रे नमस्ते सदा

---

(1) स्थपतये खाण्डिकाय, यद्वा गृहादीनां कर्त्रे - अपर आह - स्थाता च सर्वत्र पाता च सर्वस्य, पृषोदरादि (भ-भा)

(2) मन्त्रो गुप्तभाषणं, गुप्तं भाषणीया उपनिषदः, तद्वते प्रतिपादकत्वेन (भ - भा)

(3) वचने लीनाय - ख

(4) वणिगेव वाणिजः, प्रज्ञादित्वात्स्वार्थिकोऽण् । वणिग्रूपधारिणे । यद्वा तत्साद्रश्यात्ताच्छब्द्यम् ।

(5) स यथा वणिक् सर्वजनपदव्यवहारविषयं परिच्छिनत्ति एवमयं सर्वजन्तुकर्मसाक्षीति - यद्वा वाणी वाग्वाचकादिस्वरूपा, तस्यां वाच्यादिस्वरूपेण जातो वाणिजः, छान्दसं ह्रस्वत्वम् (भ - भा)

(6) वणिजां स्वामित्वेन वाणिजः (सायणः)

(7) कक्ष - ख

Our prostrations to you who are to be meditated upon through Mantras, (the secret words of the Vedas) or who are described as the Supreme spirit in the Upanishads and who are to be realised through them. We also salute you, who, remaining as a witness, weigh everyone's actions like a merchant, or often reveal yourself as the primary sense of the divine speech, who are the lord of mountain thickets, caves, river-pools and such other places and the protector of the various creatures residing therein, and who are the presiding deity for the forest region and the protector of the most inexplicable law (गहन) of Dharma. 15-16.

नमो॑ भुव॒न्तये॑ वारिवस्कृ॒तायौष॑धीनां॒ पत॑ये॒ नम॑ः ११

यस्मिन् विश्व[1]मिदं स्थितं भवति यस्तस्मिन् स्थितः सर्वतः ।। १६
यःशक्त्या भुवमातनोति निजया कर्ता धन[2]स्यापि य -
स्त्राता चार्जयतां धनस्य कृतिनां दत्वोत्तमानां धनम् ।
यस्त्राता वरिवस्कृतां करुणया येनैष विश्वात्मना
वारीशात्मतया च वारिणि सदा वासः कृतो येन च ।। १७ ।।
भूता[3]त्मा स्वयमोषधीः प्रजनयन् ग्राम्यास्तथारण्यकाः
ताः सोमात्मतया च पाति सततं तस्मै नमस्ते -

---

(1) भवति विश्वमस्मिन्नपादानत्वेन सत्ताप्रधानतया वर्तत इति भुवन्तिः, सर्वदा सर्वत्र भवतीति वा भुवन्तिः । भुवो झिच् , बहुलवचनाद्गुणाभावः । यद्वा भुवं तनोतीति भुवन्तिः तृणगुल्मौषधिपादपादीनां भूम्याधारत्वेन विस्तारयितेति (भ-भा

(2) वरिवो धनं तस्य कर्ता बरिवस्कृत् । पूर्ववत्स्वार्थिकोऽण् वारिवस्कृतः । यद्वा वरिवस्कृतो धनमर्जयतो सहायत्वेन संबन्धी वारिवस्कृतः । अन्य आह - वरिवः परिचर्या, तस्य कर्तारो वरिवस्कृताः भक्ताः, तेषामयं वारिवस्कृतः, भक्तवत्सल इति यावत् । वारिणि जले कृतो वासो येन तस्मै वारिवस्कृताय, विष्णुरूपाय वरुणरूपाय वा, आहिताग्नित्वान्निष्ठायाः परनिपातः, "अतः क्रिकमि" इत्यादिना सत्वम् (भ - भा)

(3) भूमात्मा - ख

Our salutations to you in whom the world rests, who, being its base, always dwell everywhere in it, who by your power enlarge it (by creating plants, thickets, herbs, trees etc.); who are the producer of wealth and the protector of the riches of the earners by giving them to good people; or who, out of compassion protect those who place themselves at your service, or who always reside in water (in the form of Vishnu or Varuna). We also bow to you who produce the domestic and wild herbs and plants (through your form of the five elements) and protect them with your form of the moon.

17-18.

नमॅ उ॒च्चैर्घोॅषायाक्र॒न्दयॅते प॒त्तीनां पतॅये॒ नमॅः १२

- नमः

उच्चैर्घोषवते महार्णवमहामेघादिरूपाय ते

शम्भो पाहि शिवेति भक्तनिवहैरुद्घुष्यमाणय च ॥ १८ ॥

यश्चाक्रन्दयते महोद्यमसमाह्वानैर्भटानां मुहु-

र्यः शक्तोऽपि जगन्ति जेतुमखिलान्येकः स्वयं लीलया ।

पत्तीनां[1] च पतिः पदातिशतकोटीनां च नेता भवं -

स्तस्मै देव नमो -

Our salutations to you who have assumed the forms of the roaring ocean and thundering clouds, or who are prayed by the devotees shouting "O Lord Śambho, S'iva! (the source of happiness) save us.", or who make the enemy warriors scream by challenging them to fight. Also our salutations to

---

(1) पत्तीनां पतये नमः - "एको रथो गजश्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ञैः पत्तिरित्यभिधीयते" तासां स्वामिने । यद्वा पदातीनां पतये, पदातिरूपेण त्रीनपि लोकान् जेतुं क्षमाय - (भ-भा)

you who, though powerful enough to conquer the whole universe single-handed, assume as a sport, the command of small units of the army or lead crores of foot-soldiers. 18-19

नमॅः कृत्स्नवीताय धावॅते सत्वॅनां पतॅये नमॅः ॥ १३ ॥

- नमोऽस्तु भवते कल्पान्तकाले जगत् ॥ १९ ॥

कृत्स्नं वीतमभूच्च[1] येन हरता कृत्स्ने च भूते सदा
चासीनोऽपि च सन्निधावपि सदा कल्पान्तरात्रौ तथा
योऽसौ केवल एक एव हि शिवः कृत्स्नात्मकः शिष्यते
भक्तं शोधयति[2] प्रसीदति पुनस्तस्मै च शीघ्रं सदा ॥ २० ॥
वत्सं गौरिव चानुधावति परित्रातुं स्वभक्तं जनं
नेत्रे ब्रह्मविदामनेकविधसत्वानां च तस्मै नमः ॥ २१ ॥

Our salutations to you who devour everything at the time of total destruction (while withdrawing the universe), who, continue to exist, in your form of evertything with no second and no attribute but the most auspicious, in the darkness of deluge when everything else has perished. Also our prostrations to you who wash away the sins of your devotees, bless them and rush for their protection just as a cow running after the calf to save it; and who are the leader of the realised souls as well as the creatures of various kinds. 20 - 21

---

(1) कृत्स्नं जगद्वीतं भक्षितमन्तकाले येन तस्मै । अथर्वशिरश्च भवति - "तस्मै उपसंहर्त्रे महाग्रासाय वै नमो नमः" इति । यद्वा वीते नष्टे जगति कृत्स्नात्मना स्वयमेवावतिष्ठतीति कृत्स्नवीतः, यथा 'न सन् न चासन् शिव एव केवलः' इति । पृषोदरादिः (भ-भा)

(2) धावते वेगितं गच्छते, शीघ्रं वा प्रसीदते । भक्तपातकानि शोधयते वा (भ - भा)

ध्यानम् -

मेधाराज्यवशित्वमा (?) वरवधूशत्रुक्षयाद्यं फलं
भक्तानां प्रदिशन्तमीशमृषिणा मण्डूकनाम्ना चिरम् ।
ध्यातं रुद्रमहं भजे सुरतरोर्मूले निषण्णं सदा
गौर्या मौक्तिकभूषणा (भूषिता)ङ्कममलं बालेन्दुगंगाधरम् ।। २२

इति द्वितीयोऽनुवाकः

## Dhyana for Anuvaka 2 treated as one Mantra:-

I worship Lord Rudra seated along with Gauri under the Kalpaka tree wearing Ganga and the crescent moon (on his head) and adorned with pearl ornaments. The Lord in this form meditated upon by the sage Manduka for a long time, gives to his devotees many boons such as intelligence (retentive faculty), kingdom, self-control, excellent women, destruction of enemies, etc. 22

End of Anuvaka - 2

श्री स्कन्द उवाच -

नमस्तेरुद्राद्यैः प्रतिपदनमोऽन्तैर्मनुगणैः
ऋषिर्देवध्यानप्रतिवचनवाक्यार्थमधुरैः ।
निरुक्तैरुक्तोऽर्थः श्रुतिशिरसि बोधाय सुगम
उपायस्ते ज्यायानकथयदुमायै स भगवान् ।।
गौरीनायकभाषितोऽयमगजाप्रीत्यानुवाकद्वय -
स्यार्थस्तं विवृणोमि शङ्करमुखाच्छ्रोत्रं यथा निर्गतम् ।
तत्ते स्वस्ति भवौषधं हरिहरब्रह्मादिमृग्यं मुने
भाष्यं चैतदपारशिष्यसहितः संश्राव्य मुक्तो भव ।।

इति शिवरहस्ये द्वादशांशे सप्तविंशोऽध्यायः

## अथ शिवरहस्ये द्वादशांशे अष्टाविंशोऽध्यायः
## अथ तृतीयोऽनुवाकः

नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमः १

हर्तुं भर्तुमकर्तुमाशु च जगत्कर्तुं कृतं चान्यथा
कर्तुं दुर्घटमेव संघटयितुं शक्तस्त्वमेकः प्रभुः ।
तस्मात्ते सततं नमोऽस्तु निजया शक्त्याभिभूतं जगत्
सर्वं स्वामिनि कुर्वति च सहमानायापराधान्[1] सताम् ॥ १
साधून् पालयितुं खलांश्च नितरामाविध्यते, हन्त्यलं[2] (घ्नन्त्यलं)
याः सेना अभितः परानभिमुखान् तासां च नेत्रे नमः ।

## Anuvaka - 3

### Mantra - 1

You are the one God capable of withdrawing, protecting, undoing and soon creating the universe. Again you alone are powerful enough to nullify or modify what has been created, and accomplishing the task of uniting things that are difficult to be united. Therefore our prostrations to you who, after subduing the whole universe with your own power (Māya) absorb it within yourself, or who tolerate the guilt of the good and who strike the wicked hard for protecting the pious. We also bow to you, the leader of the armies which surround and kill the enemies who face (attack) them. 1-2

---

(1) पूर्वानुवाके द्रव्यविषयं देवस्याधिपत्यं प्रतिपादितम् । अत्रतु क्रियाविषयमाधिपत्यं प्रदर्शयितुमारभते - नमः सहमानाय - सहतिरभिभवकर्मा छन्दसि स्वव्यतिरिक्तं सर्वमभिभवति । अपर आह - सहमानाय - क्षममाणाय, कृतानप्यपराधान् भक्तानामिति । (भ-भा)

(2) ते त्वलम् - क । हन्ति is the reading of 'ख' which is adopted with the suggestion to change it to plural.

नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमः २

देवेशाय नमो महावृषककुद्भागाधिरूढाय[1] ते
प्रोद्यत्खड्गमहाप्रहारपटवे चौर्याय लीलात्मने[2] ॥ २ ॥
चोराणामपि भक्तवत्सलतया[3] संरक्षकायाथवा
तेषां श्रेष्ठतमाय सर्वहरणादन्ते नमः -

Salutations to you, the most prominent among the Gods, or one seated on the hump of the great bull, and who are an expert in sword-fight. Our prostrations to you who assume the role of thieves for sport, or who protect the thieves on account of affection for devotees, or who are the greatest of all thieves by snatching away everything in the end; 2

नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः ३

- ते नमः
उद्यत्खड्गवते जनेषु नितरां भक्तेषु सक्ताय[4] वा
तूणीरोत्तमधारिणेऽपहरतां[5] साक्षान्महारण्यके ॥ ३ ॥
व्याधानां पतये नमो -

---

(1) ककुभाय प्रधानाय, उच्छ्रिताय वा । वृषभस्य वा ककुदि भातीति, पृषोदरादिः (भ-भा)

(2) स्तेनाः गुप्तचोराः, तेषां पालकाय नमः । रुद्रो हि लीलया नट इव तत्तद्वेषं धत्ते । यद्वा तस्य सर्वजगदात्मकत्वात् ये यत्र यथा वर्तन्ते तत्र तथारूपेण रुद्रो वर्तत इति रुद्रस्य सार्वात्म्यमनुसन्धातुं मन्त्रैरेवमुच्यते - (सायणः)

(3) स्तेनानामाश्रितानां अश्रितवत्सलतया तत्पापापनोदनेन स्वामी भूत्वा रक्षणं करोति । यद्वा स्तेयकारिणां परिवृढाय, स्तेयकरणे त्वत्सदृशो नास्तीति (भ-भा)

(4) नमो निषङ्गिणे भक्तेषु नितरां सक्तिमते । इषुधिमते निषङ्गेषुधी व्याख्यातौ - (Anuvaka I - 12) तद्वते (भ-भा)

(5) प्रहरतां - क । वनादिषु तिष्ठन्तो ये प्रत्यक्षं हरन्ति ते सार्थापहारकादयः तस्कराः (dacoits) (भ-भा)

Prostrations to the wielder of the sword, or the one firmly attached to the devotees and to the bearer of excellent quivers. We also bow to the lord (leader) of the robbers who rob openly in the forest;

नमो॒ वञ्च॑ते परि॒वञ्च॑ते स्ता॒यू॒नां पत॑ये॒ नम॑ः ४

- नम इदं ते वञ्चनां कुर्वते

यः कुर्वन्नपि विप्रलम्भ[1]मभितो व्याहन्यते नापरैः ।

तस्मै ते परितः सदा विचरते हर्तुं परेषां धनं

नित्यं कृत्रिमसाधुवेष[2]मयतां नानाविधच्छद्मनाम् ॥४ ॥

स्तायूनां पतये नमो -

Salutations to you (the lord of those) who practise deceit and who move about cheating everywhere without being (stopped) obstructed anywhere. We also salute you, the lord of those who roam about in the disguise of mendicants and such other disguises and steal (carry away) the wealth of others; 4

नमो॑ निचे॒रवे॑ परि॒चरा॒या॑रण्या॒नां पत॑ये॒ नम॑ः ५

- नम इदं संहारशीलाय ते

दार्ढ्यार्थं नितरां वनेषु सततं त्रातुं जनानाश्रितान्

सुव्यक्तं परितः सदैव चरते स्वामिन्नरण्येऽनिशं

दस्यूनां वसतां नमोऽस्तु पतये - ५

(1) वञ्चतिर्गत्यर्थो विप्रलम्भार्थो वा । परिवञ्चते परितः सर्वत्र गच्छते विप्रलम्भं कुर्वन् क्वचिदपि न प्रतिहन्यते तस्मै (भ-भा)

(2) छद्मचारिणो ये वस्त्रादीन् हरन्ति कपटसाधुवेषास्ते स्तायवः - (भ-भा)

Our prostrations to you (the lord of those) who practise killing (the animals etc.) in the forests to gain experience and who keep constantly moving to protect their dependants. We also salute you, the lord of those who dwell in the forests permanently and rob the wealth of travellers; 5

नमः सृकाविभ्यो जिघांसद्भ्यो मुष्णतां पतये नमः ६

- तेभ्योऽपि नित्यं नमः

ये रुद्रा सदृशास्त्वया धृतमहावज्राद्यनेकायुधाः[1]
तेषां चानुचरा वरायुधधरास्तोमावितारोऽथवा ।
मर्त्या[2] येऽप्यतिहिंसकाश्च धनधान्यादीनलं मुष्णतां
व्याधानां पतये नमोऽस्तु भवते - ६

Our salutations to Rudras similar to you in form and armed with Vajra and such other mighty weapons, or to your followers who hold powerful weapons, or to the guards of armouries and also to those who are the worst killers. Also our salutations to you, the lord of those who steal grains and such other wealth (from the fields); 6

नमोऽसिमद्भ्यो नक्तंचरद्भ्यः प्रकृन्तानां पतये नमः ६

- तेभ्योऽपि नित्यं नमः

उत्कोशासिधरेभ्य आशु नगरे नक्तं चरद्भ्यः सदा
चौर्यायैव, हरन्ति ये निशि[3] धनं हत्वैव तेषामपि ।
नाथायास्तु नमो -

---

(1) सृकमिति वज्रनाम, तेन चायुधमात्रं लक्ष्यते, तद्वद्भ्यः । यद्वा सृकाद्यायुधानामवितृभ्यः-(भ-भा)

(2) मर्त्यस्याप्यथ हिंसकाः - स्व = who murder even human beings.

(3) निधिघनम् - क = who loot the treasures after killing the guards. "प्रकृन्तानां प्रकर्षेण छिन्दतां पतये । रात्रौ चरन्तः हत्वैव प्राणिनः धनादिकमपहरन्ति तेषाम् (भ-भा. । हत्वैवापहरन्तः प्रकृन्ताः, तेषां पालकाय नमः (सायणः)

Salutations to (the lord of) the wielders of drawn swords and to those who roam about at night in the town for stealing. We also salute the lord of those who kill and carry away wealth at night;

नमँ उष्णीषिणेँ गिरिचरायँ कुलुञ्चानां पतँये नमँः ७

– नमोद्यतमहोष्णीषाय तुभ्यं नमो
व्याधैः सञ्चरते हरन्ति पृथिवीं[1] ये वा प्रकृन्ता बलात् ॥ ८ ॥
क्षुद्रारण्यगिरिप्रदेशपतयः क्षुद्रक्रि[2]याभिर्धनं
हर्तारः कुलकुञ्चकाश्च पतये तेषां नमस्ते –

Our prostrations to you wearing a huge turban and wandering in the forest in the company of hunters. We also salute you, the lord of those who take possession of the land (of kings etc.) by force, or the petty chieftains of the forest and mountain lands who rob wealth through very low deeds, or those who kidnap families (or groups of men); 7

नमँ इषुँमद्भ्यो धन्वाविभ्यँश्च वो नमँः ९

– नमः
हस्तेनैक[3]तमेन सम्प्रति दधानेभ्यो महेषुं धनुः
सव्येनान्यतमेन वः पथि करेणात्तं वहद्भ्यो नमः ॥ ९॥

(1) कोः पृथिव्याःहर्तारः कुलुञ्चाः, राज्ञां भुवोऽपहारिणः-(भ-भा)

(2) यद्वा कुत्सितं लुञ्चन्तीति कुलुञ्चाः विचित्रव्यसनोत्पादनेन ये धनान्यपहरन्ति । यद्वा कुलानां लुञ्चकाः कुलुञ्चाः (भ-भा)

(3) भीषयितुं हस्ते बाणधारिणः इषुमन्तः, तथा भीषयितुं हस्ते धनुर्धारिणो धन्वाविनः, तदुभयरूपा हे रुद्राः, वो युष्मभ्यं नमः (सायणः) । धन्वाविभ्यः मत्वर्थीयो विनिः, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् (भ-भा)

Our salutations to you, the Rudras who now walk along the path holding the great arrow by one (the right hand) and the bow by the left hand; 8

नमँ आतन्वानेभ्यँः प्रतिदधानेभ्यश्च वो नमँः १०

अस्यद्भ्यश्च नमोऽथ कुर्वत इमे (कुर्वद्भ्यश्च[1] नमो धनूंष्यथ सदा)

युद्धाय सज्जान्यलं

सज्जे दिव्यधनुष्यमोधशरसन्धानं मुहुर्वेगतः ।

कुर्वद्भ्यश्च नमो -

Salutations to you (the Rudras) who tighten the strings of your bows and make them quite ready for fighting, and also to you who fix the unfailing arrows quickly to the divine bow that has been strung;

नमँ आयच्छँद्भ्यो विसृजद्भ्यँश्च वो नमँः ११

- नमः शरवरान् सन्धाय चापे समा -

कर्षद्भ्यो विसृजद्भ्य एव च नमो - ९

Prostrations to you, (the Rudras) who, having fixed the best arrows to the bow, draw (the string) and discharge them; 9

नमोऽस्यँद्भ्यो विद्ध्यँद्भ्यश्च वो नमँः १२

- भूयो नमः सायकान्

ज्यामुक्तानभितः परानभिमुखान् संप्रापयद्भ्यः शरान्

तैः शत्रून् प्रहरद्भ्य एव परितः शश्वन्नमो वो -

Salutations to you (Rudras)who direct the arrows released from the bow-string to reach the enemies facing you and also

---

(1) आतन्वानेभ्यः धनूंष्याततज्यानि कुर्वद्भ्यः (भ-भा) धनुषि ज्यामारोपयन्तः आतन्वानाः (सायणः)

to you who strike the enemies effectively with those arrows from all directions;

नम आसीनेभ्यः शयानेभ्यश्च वो नमः १३

- नमः

आसीनेभ्य इतस्ततो भुवि शयानेभ्यो गुहाभ्यन्तरे -

ष्वायासेन च वो नमो -

Salutations to you (Rudras) who squat here and there and who, being tired, lie inside the caves;

नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमः १४

- नम इदं तेषु स्वपद्भ्यः सुखम् ॥ १०

जाग्रद्भ्यश्च नमो -

We also bow to you, (the Rudras) who sleep comfortably in the caves and also to those who keep awake; 10

नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः २५

- नमः क्वचिदधस्तिष्ठद्भ्य एव क्वचित्

धावद्भ्यश्च नमो -

Salutations to you (Ṙudras) who stand on the ground in some places and also to those who run about;

नमः सभाभ्यः सभापतिभ्यश्च वो नमः १६

- नमः समुपविष्टेभ्यःक्वचित्सङ्घशः ।

स्वामिभ्यः सदसां नमो -

Salutations to you, Rudras, who assemble and sit somewhere in groups and also to those who preside over such assemblies;

नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः १७

— नम इदं चाश्वेभ्य एवाथवा
येषां श्वस्तनवित्तमात्रमपि नैवास्तीह तेभ्योऽपि च ॥ ११ ॥
अश्वाध्यक्षतमेभ्य उज्ज्वलमहास्त्रेभ्यो नमः —

Prostrations to you, (Rudras) who appear in the form of horses, or who do not possess enough wealth even for the next day, and also to you who are the custodians or riders of horses and armed with mighty and shining weapons. 11

— श्रीमतो
देवस्यानुचराः किरातवपुषः श्रीरुद्रसंघाः परे ।
लीलासंभृतविग्रहा भगवतस्तस्यांशभूताः सदा
ये चान्ये परितश्चरन्ति बहवस्तेभ्योऽपि नित्यं नमः ॥ १२ ॥

**Summary of Anuvaka - 3**

We constantly bow to the Lord's followers in the form of hunters; to the groups of Rudras assuming various forms for sport; and also to his partial incarnations who keep moving about everywhere. 12.

## ध्यानम् —

स्वात्मानं हृदि भावयन्तमनिशं रुद्रं रिपुघ्नं सतां
राजामात्यसमस्तराष्ट्रपुरहस्त्यश्वादिरोगापहम् ।
बर्होत्तंसधरं किरातवपुषं देवं युवानं श्वभि -
र्भूतैश्चावृतमग्रतो मुनिजनैर्ध्येयं सदा चिन्तये ॥ १६ ॥[2]

इति तृतीयोऽनुवाकः

---

(1) न विद्यते श्वस्तनं धनं येषां ते अश्वाः, तेभ्यः, निष्परिग्रहेभ्य इति यावत् — (भ-भा)
(2) मुनिगणैः — क

## Dhyana for the whole Anuvaka treated as one Mantra-

I always contemplate on youthful Rudra in the form of a hunter, wearing the peacock feather on His head, surrounded by dogs and other animals, experiencing a vision of His own self in His heart and contemplated upon by ascetics. The Lord meditated upon in this form is the destroyer of the enemies of the good and the remover of the diseases of kings, ministers, the whole kingdom, the cities, elephants, horses and others. 13

**End of Anuvaka - 3**

श्रीस्कन्द उवाच -

योऽत्रानुवाकत्रयमेतदद्भुतं
योऽर्थं तथा ध्यानमिदं हृदा मुदा ।
सन्धाय मन्त्रांश्च शिवस्य भावतः
पठेत्स भुक्तिं समुपैति मुक्तधीः ॥

## अथ चतुर्थोऽनुवाकः

### नम॑ आव्याधिनी॑भ्यो विविध्य॑न्तीभ्यश्च वो॒ नम॑ः १

श्रीस्कन्द उवाच -

सर्वाभ्यश्च[1] नमोऽस्तु या भगवतः सेनाः समन्ताद्बलान्
आविध्यन्ति जगद्धिताय विविधा यास्ताडयन्त्युद्धतान्

## Skanda said -

Salutations to your armies which strike the enemy forces from all sides for the welfare of the world and which punish the haughty in so many ways;

(1) नम आव्याधिनीभ्यः:- अतः परं क्रियागुणद्रव्यविषयमाधिपत्यं द्रष्टव्यम् । अस्मिन्ननुवाके सर्वे मन्त्राः प्रत्यक्षकृताः । संघाता एव नमस्क्रियन्ते । (भ - भा)

नम उगणाभ्यस्तृंहतीभ्यश्च वो नमः २

या उत्कृष्टगणैश्च[1] पत्तिनिवहैः पूर्णाश्च या हिंसिनीः

Salutations to your armies consisting of excellent infantry regiments (or the superior Matṛganas (सप्तमातरः) and infantry regiments) and those who harass the wicked;

नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः २

व्यापारान् परिगूहयन्ति कुशलप्रज्ञाविशेषाश्चये[2] ॥२ ॥

तेषां ये पतयश्च -

Salutations to you who assume the forms of highly intelligent persons clever in hiding their activities and also to their leaders;

नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः ४

- ये त्वनियतां वृत्तिं मुहुः संश्रिताः

नानाजातिसमुद्भवा[3] बहुविधक्षुद्रक्रियाजीविनाम् ।

संसूता (सङ्घाताः) अथ तानवन्त्यपि च ये -

Prostrations to you (Rudras) who appear in the form of men born of various classes depending on indefinite means of livelihood, and living on a variety of mean activities and also to their protectors;

नमो गणेभ्यो गणपतिभ्यश्च वो नमः २

---

(1) उगणाभ्यः उत्कृष्टगणाभ्यः । "पत्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् । सेनामुखे गुल्मगणौ - -" (भ - भा) उत्कृष्टगणरूपाः सप्तमातृकाद्याः स्त्रियः उगणाः । (सायणः)

(2) गृत्सेभ्यो मेधाविभ्यः । ये बुद्धिमत्तया गृत्सन्ति जीवन्ति ते गृत्साः(भ-भा)

(3) नानाजातीयाः अनियतवृत्तयः उत्सेधजीविनां संघाः व्राताः - (भ-भा) नानाजातीनां संघाः व्राताः (सायणः)

- ये भूतरक्षोगणाः

रुद्राः[1] पारिषदास्तथाधिपतयस्तेषां च ये -

Our salutations to you, Rudras in the form of groups of spirits and demons, or the Pramatha Ganas and their close associates and also to their protectors. 2

नमो॑ विरू॒पेभ्यो॑ वि॒श्वरू॑पेभ्यश्च॒ वो॒ नम॑ः ६

- ये परे

नग्ना मुण्डितमस्तकातिविकृताकाराश्च[2] ये स्वेच्छया

सिंहव्याघ्रगजाश्वसैरिभवृषाद्याकारभाजश्च[3] -

Salutations to Rudras in ugly and naked forms with shaven heads; and also to those who, at their free will, assume the forms of lions, tigers, elephants, horses, buffaloes and bulls etc.;

नमो॑ म॒हद्भ्य॑ः क्षु॒ल्ल॒केभ्य॑श्च॒ वो॒ नम॑ः ७

- ये

ज्ञानाकारगुणप्रभावविभवैर्नित्यं महान्तश्च ये

क्षुद्रज्ञानगुणप्रभावविभवाः - ३

Prostrations to those who are always great by their knowledge, personsality, virtues, prowess and wealth and also to those whose knowledge, power and wealth are insignificant; 3

नमो॑ र॒थिभ्यो॑ऽर॒थेभ्य॑श्च॒ वो॒ नम॑ः ८

- ये वा रथाधिष्ठिताः ॥

ये युद्धेषु रथान्वितेषु चरणैर्धावन्ति शत्रून् मुहुः

---

(1) ये त्वत्पारिषदाः - ख

(2) विकृत - ख

(3) व्याघ्रगणाश्च - क

Salutations to those who ride chariots and also to those who chase their enemies on foot in battles fought on chariots;

नमो रथेभ्यो रथपतिभ्यश्च वो नमः ९

ये चन्द्रार्कमहीमुखाः सुरगणाः[1] प्राप्ता रथत्वं विभोः

ये रक्षन्ति रथान् बहून् स्वयमनारुह्यैव शक्त्या स्वया

Prostrations to the Moon, Sun, Earth and other celestials who assumed the form of the Lord's chariot, and to those who protect the chariots with their prowess even without mounting them;

नमः सेनाभ्यः सेनानिभ्यश्च वो नमः १०

ये रुद्राः परितः शिवस्य पुरतः सेनात्वमेत्यासते ।। ४

ये तासामपि नायकाः सुरवराः -

Salutations to those Rudras, who as soldiers stay around Siva, and also to those prominent Gods who assume their command; 4

नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमः ११

- ये सूतरूपाः सुराः

ये गृह्णन्ति रथेषु रश्मिनिवहान् सूताज्ञया किङ्कराः ।

Salutations to those Gods who assume the role of charioteers and also to those servants who hold the reins under the orders of the charioteers;

नमस्तक्षभ्यो रथकारेभ्यश्च वो नमः १२

ये स्युर्वर्धकि[3]जातिजा अपिच ये दक्षा रथानां कृतौ,

---

(1) हयांश्च चतुरो वेदान् सर्वदेवमय रथम् (महाभारतम्)

(2) अवारुह्य - क

(3) तक्षभ्यः वर्धकिभ्यः । सर्वेऽप्येते शिल्पिनो जातिविशेषाः देवाधिष्ठानशङ्कया नमस्क्रियन्ते (भ-भा)

We bow to Rudras born in the community of carpenters and to those who are skilled in making chariots;

नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः १३

ये जाताश्च कुलालजातिषु तथा ये लोहकाराश्च – ५

Prostrations to those Rudras who are born in the family of potters and also to those born as metal-smiths;

नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमः १४

– ये

नानापक्षिसमूहबन्धनविधौ दक्षाश्च ये वै जनाः

मत्स्यादि[1]प्रतिघातकाः–

Salutations to those who are clever in catching flocks of birds, and to those who catch and kill fish and such other creatures;

नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमः १५

– अपि च ये कुर्वन्ति तीक्ष्णानिषून् ।

ये वा धन्वकृतश्च –

Prostrations to those who are the makers of sharp arrows and also to the makers of bows;

नमो मृगयुभ्यः श्वनिभ्यश्च वो नमः १६

– ये वनमृगव्या[2]धाः सदा ये नराः

नेतारश्च शुनां च वृत्तिनिरताः–

Prostrations to those who hunt animals in the forest and to those who maintain and lead the hounds. 6

(1) मत्स्यघातिनो निषादाः, ते हि नितरां सादयितारः, संघशो जन्तून् घातयितुकामत्वात् –(भ–भा)

(2) मृगयुभ्यः मृगव्याधेभ्यः । ते हि मृगान् यान्ति सातत्येन जिघांसया । मृगय्वादयश्च इति याते: कुप्रत्ययः – (भ–भा)

नमः श्वभ्यः श्वपतिभ्यश्च वो नमः १७

– ये वा शुनामाकृतिं

बिभ्राणा अथ ये शुनां च पतयः शम्भोस्तथांशांशका:[1]

सर्वे मर्त्यजगद्गताः कुमनुजाः–

Salutations to those Rudras who appear in the form of dogs and also to those who appear as the masters of hounds; and to all those low-born men who are the parts of Lord Śambhu descended on earth.

– विश्वेश्वरांशाश्च ये[2]।

ये भूमौ[3] दिवि चन्द्रसूर्यधरणीब्रह्माग्निविष्ण्वादयो

ये रुद्राश्च जगन्ति पान्ति परितः पूर्णाः शिवस्यांशकाः ॥ ७ ॥

ये सन्ति प्रमथादिरूपचरिताः सर्वेभ्य एवाधुना

तेभ्यः संप्रतिपूरुषं स्तुतिनुतीः कृत्वा नमस्कुर्महे ॥८ ॥

**Substance of Anuvakas 2,3 and 4 -**

We offer our mental, oral and physical prostrations to the Rudras who are the parts of the Lord (Viśveśvaramśa) on the earth and in the sky such as the Moon, Sun, Earth, the Creator, Fire, Vishnu etc., who pervade all the worlds and protect them. We also offer our prostrations to the partial incarnations of Śiva assuming the form and behaviour of the Pramatha Ganas, individually. 7-8

---

(1) केचिदाहुः- सर्वेऽपि चैते विविधाराधनसंप्रणीतपरमेश्वरप्रसादभाजो जातिविशेषा एव नमस्क्रियन्ते इति (भ-भा)

(2) ते - क।

(3) द्वितीयानुवाको लीलार्थदेवतामूर्तिप्राधान्येन स्तोतुं प्रवृत्तः, त्रितीयानुवाकश्चोरमूर्तिप्राधान्येन स्तोतुं प्रवृत्तः । चतुर्थो नानाजातिमूर्तिप्राधान्येनेति विभागो द्रष्टव्यः । (सायणः)

## ध्यानम् -

शम्भुं दुःसहदुष्टकुष्ठ[1]विविधव्याधिज्वरापस्मर -
प्रध्वंसैकपटुं[2] शिवं स्मरहरं दुर्वासनाम्नार्चितम् ।
भस्मोद्धूलितविग्रहं त्रिणयनं भास्वज्जटामण्डलं
स्वासीनं वृषभे गणैः परिवृतं साम्बं सदा भावये ॥ ९ ॥

इति चतुर्थोऽनुवाकः

## Dhyana for Anuvaka 4 treated as one Mantra-

I always contemplate on Śambhu possessed of three eyes and a mass of shining matted hairs, the destroyer of cupid, seated comfortably on the bull along with the universal mother, his body smeared with sacred ashes and (himself) surrounded by the Pramatha Ganas. The Lord worshipped by Durvasas in this form eradicates the unbearable afflications caused by leprosy and such other bad diseases - fever, fits or loss of memory etc. 9

**End oı Anuvaka - 4**

## श्रीस्कन्द उवाच -

श्रीरुद्रं यजुषां च मध्यममहाकाण्डे चतुर्थे स्थितं
संसाराभयभेषजं प्रजपतां विश्वेशभक्तिप्रदम् ।
तस्मिन्नर्थयुतो विभासति हृदामत्रानुवाको मुदा
चातुर्थः सकलात्मतां भगवतो वक्तुं प्रवृत्तो मुने ॥

इति शिवरहस्ये द्वादशे अंशे
अष्टाविंशोऽध्यायः

---

(1) कष्ट - क । (2) प्रक्षेप्तारमजम् - क ।

## अथ शिवरहस्ये एकोनत्रिंशोऽध्यायः

## Chapter 29 in Sivarahasya

## अथ पञ्चमोऽनुवाकः

नमो भवाय च रुद्राय च, १

श्री स्कन्द उवाच -

विश्वं यः सततं बिभर्ति समधिष्ठायैव मूर्त्यष्टकं[1]
यस्ताभिस्तनुभिश्शिवाभिरनुगृह्णातीह तस्मै नमः ।
यः सर्वत्र[2] सुपूर्ण एव भवति स्वस्मिन् विलीनं जगद्
भूयो भावयति स्थितं भवति तद्यस्मिंश्च यो भाव्यते ॥ १
योगीन्द्रैर्भगवानपां स्वयमधिष्ठाता च योऽसौ रुजां
नित्यं द्रावयिता सतां स्वयमधिष्ठाता च सूर्यस्य यः ।
तस्मै नित्यमिदं नमोऽस्तु[3]

### Anuvaka - 5

Skanda said - Salutations to you who eternally support the universe through your eight forms (bodies), who are omnipresent, who again bring to existence the world absorbed within you, in whom, (as the base) the world survives, who are the presiding deity of (the element of) water. Also our salutations to you, the remover of afflictions and diseases and the presiding deity of the Sun. 1

---

(1) एवं त्रिभिरनुवाकैर्देवस्य विश्वाधिपत्यं प्रतिपादितम् । इतः परं अष्टमूर्त्यधिष्ठानभेदेन च देवः स्तूयते- भ-भा

(2) भवत्यसौ सर्वत्र सर्वदेति भवः । पचाद्यच् । भवत्येव न कदाचिन्न भवतीति । भावयति सर्वं, भाव्यते सर्वैरिति वा, ---- भवत्यस्मिन् सर्वमिति वा । अयं चाष्टमूर्तिष्वपामधिष्ठाता । रुद्रायेति व्याख्यातम् । अयं सूर्यस्याधिष्ठाता - भ-भा

(3) गता उभयतो नमस्काराः । अतः परमन्यतरतो नमस्काराः, तत्रापि पुरस्तान्नमस्काराः - भ-भा

नमः शर्वाय च पशुपतये च, २

\- युगपत्कल्पान्तकाले[1] जगत्

सृष्ट्वैवाशु विहिंसते स्वयमधिष्ठात्रे तथाग्नेरपि ॥ २

आज्ञादण्डधरः प्रसादितमहामायोरुपाशः पशून्

ब्रह्मादीनवतीह भूतनिवहा[2]धिष्ठातृरूपश्च यः ।

तस्मै सर्वसुराधिकाय जगतामीशाय तुभ्यं नमः

Prostrations to you who at one stroke annihilate the whole world at the time of the final deluge and who are the presiding deity in (the element) fire. Also our salutations to you, the Paśupati - the protector of the ignorant persons from the creator downwards bound by the rope of delusion and who are the controlling power of all creatures and the presiding deity of (the element) Earth. Salutations to you, the highest of Gods and the master of the Universe. 2

नमो नीलग्रीवाय च शितिकण्ठाय च, ३

नीलग्रीवकलेबराय शितिकण्ठेशाय तुभ्यं नमः ॥ ३

Salutations to you possessed of a body with (partially) black neck and also to one with (partially) white neck. 3

नमः कपर्दिने च व्युप्तकेशाय च, ४

योगीशाय कपर्दिनेऽखिलमहायोगेषु (यागेषु) दीक्षाभृते

तुभ्यं लुप्तशिरोरुहाय यजमाना[3]कारभाजे नमः ।

---

(1) शृणाति हिनस्ति सर्वमन्तकाले इति शर्वः । "शॄ हिंसायाम्" अयमग्नेरधिष्ठाता - भ-भा । शृणाति हिनस्ति पापमिति शर्वः । पशुसमानानज्ञानिनः पुरुषान् पालयतीति पशुपतिः- सायणः

(2) पशुपतये पशूनां पालयित्रे —— अयं हि भूमेरधिष्ठाता - भ-भा

(3) यजमानाकाराय तुभ्यं - क (वृत्तभङ्गः)

Prostrations to you possessed of a mass of matted hairs as one initiated for the practise of all kinds of Yogas (meditation) or for all kinds of Yajnas (sacrifices), and also to you, a Sanyasin with shaven head, or to one who has assumed the form of Yajamana, a sacrificer with shaven head.

नमः सहस्राक्षाय च शतधन्वने च, ५

देवेशाय[1] सहस्रलोचनभृते[2] शक्रात्मने ते शता -
न्यत्यन्तोत्तमधन्वबाणविविधानेकायुधानां[3] युधि ॥ ४
बिभ्राणाय नमो -

Salutations to you, the lord of the gods with thousand eyes, or one assuming the form of Indra; and also to you, the wielder of hundreds of excellent bows, arrows and various other weapons in battle. 4

नमो गिरिशाय च शिपिविष्टाय च, ६

- गिरीश्वरकृतावासाय दिग्वाससे[4]
रश्मिव्रातवृतार्कमण्डलसमाविष्टाय सूर्यात्मने ।
सर्वप्राणिहृदम्बुजेषु वसते तुभ्यं नमो -

Prostrations to you residing in Kailasa and also to one who are naked (having the quarters for your clothes), or who reside in the form of the sun in the midst of multitudes of rays, or who reside in the heart of all living beings in the form of Antaryami.

---

(1) लोकेशाय - क

(2) सहस्राक्षाय - बहुचक्षुषे इन्द्ररूपिणे वा - भ-भा

(3) शतधन्वने बहुधन्वने बह्वायुधधराय वा - भ-भा

(4) शिपिविष्टाय च - निर्वेष्टितशेफाय, यद्वा आदित्यात्मने - "शिपयो रश्मयः स्मृताः" तेषु प्रविष्टाय, सवित्रे —, यद्वा पशवः शिपयः "यज्ञो वै पशुः, पशवः शिपयः" इति श्रुतेः, सर्वप्राणिष्वन्तर्यामिरूपेण प्रविष्टायेत्यर्थः - भ-भा

नमो मीढुष्टमाय चेषुमते च, ७

- रेतसः

सेक्त्रे दिव्यहिरण्मयस्य च हरेर्गर्भे विधात्रे विधेः ॥ ५

शूरायात्तमहेषवे नम इदं -

Prostrations to you who deposited the seed of creat on in the divine Hiranyagarbha, a form of Hari, and (thus) gave birth to the creator; and also to you, the br ve warrior holding the mighty arrow. 5

नमो ह्रस्वाय च वामनाय च, ८

- स्वल्पप्रमाणाय च

स्वेच्छासङ्कुचिताङ्गकाय च नमस्तस्मै -

Prostrations to you, the short one and also to one reducing the body to small size at your free will,

नमो बृहते च वर्षीयसे च, ९

- बृहद्रूपिणे ।

ज्ञानाकारवयस्तपोभिरभिवृद्धायाथ तस्मै नमो

Salutations to you, who are huge in size and also to you who are far advanced in knowledge, appearance, age and penance.

नमो वृद्धाय च संवृध्वने च, १०

वृद्धायाधिकदीर्घकालवयसा स्तोत्रैः प्रवृद्धाय च ॥ ६

सम्यग्वर्धयते स्वभक्तनिवहान् देवाय तस्मै नमो

Prostrations to you who are advanced in age and also to one whose glory is enhanced by Stotras (praises), or who increase the prosperity of your devotees. 6

नमो अग्रियाय च प्रथमाय च, ११

विश्वाग्र्याय तथा प्रधानपुरुषायेदं नमोऽस्तु -

Salutations to you who are the first in the universe (being its cause) and also to you, the foremost among men.

नम आशवे चाजिराय च, १२

- आशवे[1]

शीघ्रानेकगतिप्रभेदकुशलायेदं[2] नमः -

Prostrations to you who spread swiftly and also to one who are skilled in various modes of quick movements.

नमः शीघ्रियाय च शीभ्याय च, १३

- शीघ्रगे -

ष्वाविर्भावयते च तेषु विविधाकारप्रवाहेषु[3] च ॥ ७

नित्यं सन्निहिताय ते नम इदं -

Salutations to you who manifest in quick-moving objects and also to one who are ever present in them and in the running streams of different shapes. 7

नम ऊर्म्याय चावस्वन्याय च, १४

- स्थात्रे महोर्मिष्वपां

निष्कम्पा विगतस्वनाः पुनरवाचीनस्वनाश्चापि याः ।

आपस्तासु च सर्वदा निवसते तस्मै नमः -

Prostrations to you who dwell in huge waves and also to one who reside in still waters making no, or little sound.

नमः स्रोतस्याय च द्वीप्याय च, १५

- स्रोतसां

मध्ये सन्निहिताय किञ्च वसते द्वीपेषु पुण्येषु च ।

(1) आशवे शीघ्रव्यापिने - भ-भा

(2) अजिराय गमनकुशलाय, "अजगतिक्षेपणयोः," इरच् निपात्यते - भ-भा

(3) शीघ्रियाय - शीघ्रं वहन्तीष्वप्सु भवाय - भ-भा

शीभ्याय - शीभशब्दः उदकप्रवाहवाची, तत्रावस्थितः शीभ्यः (सायणः)

इति पञ्चमोऽनुवाकः

Salutations to you who are present in the centre of streams and also to one residing in sacred islands. 8

**End of Anuvaka 5**

अथ षष्ठोऽनुवाकः

नमो ज्येष्ठाय च कनिष्ठाय च १

तुभ्यं देव नमः पितामहहरीन्द्रेभ्यः प्रशस्ताय[1] च

ज्येष्ठायातिमनोज्ञनित्यतरुणाकाराय नित्यं नमः ।

## ANUVAKA-6

Prostrations to you who are superior in eminence to Brahma, Viṣṇu and Indra and the eldest of all. Also our salutations to you who are eternally young and beautiful.

नमः पूर्वजाय चापरजाय च २

विश्वस्मादपि पूर्वमेव वसते[2] स्थात्रे च तस्मात्परं

जन्मान्तादिविवर्जिताय च नमो - ९

Salutations to you who existed before the universe was bron and also to you who will remain after its end; and who are free from birth, growth, change, decay and death. 9

नमो मध्यमाय चापगल्भाय च ३

- मध्ये प्रसिद्धाय च ॥

लीलाशैशवधारिणे नम इदं -

(1) नमो ज्येष्ठाय - वृद्धतमाय, प्रशस्यतमाय । कनिष्ठाय युवतमाय, बालतमाय स्वल्पतमाय वा - भ-भा

(2) पूर्वस्मिन् काले जाताय, अजातायेति यावत् । या सर्वप्राणिभ्यः पूर्वभाविनी सत्ता सेह जननेन लक्ष्यते । मुख्यस्य जन्मनः अभावात् । अपरजाय - अपरस्मिन् काले जाताय, सर्वप्राणिभ्यः उर्ध्वमपि विद्यमानाय - भ-भा

Prostrations to you who exist during the intervening period and who assume childhood for sport.

नमो जघन्याय च बुध्नियाय च, ४

- तुभ्यं जघन्याय[1] च

स्थित्यन्तादिमतामशेषजगतां मूलाय[2] तुभ्यं नमः ।

Salutations to you who are born of the hind part (of the cows and other animals in the form of calves) and also to one who are the root cause of everything on earth that is subject to (birth) existence and death.

नमः सोभ्याय च प्रतिसर्याय च, ५

गान्धर्वे[3] नगरे तथैव नगरेष्वन्येषु सर्वेषु च

स्थात्रेऽधीशतया प्रतीपसरणे[4] दक्षाय तुभ्यं नमः ॥ १०

Prostrations to you who stay in the city of Gandharvas and in other cities as their lord and also to one clever in walking against the current. **10**

नमो याम्याय च क्षेम्याय च, ६

प्राणिप्राणसमूहसंयमनमप्यन्ते[5] स्वयं कुर्वते

नित्यं संवसते यमस्य च पुरे कालान्तकाद्यात्मना ।

विश्वक्षेमविधायिने नम इदं -

---

(1) जघने गवादीनां पश्चाद्भागे वत्सादिरूपेण भवो जघन्यः (सायणः)

(2) बुध्नं मूलं, तत्र भवाय - भ-भा

(3) सोभं नाम गन्धर्वनगरम् "शाल्वः सोभमधिष्ठाय" इति महाभारते, इदं सर्वनगरोपलक्षणम् तत्र भवाय । भ-भा । उभाभ्यां पुण्यपापाभ्यां सह वर्तत इति सोभो मनुष्यलोकः, तत्र भवः सोभ्यः (सायणः)

(4) प्रतिकूलं सरणं प्रतिसरो रक्षाबन्धो वा, तत्र भवाय - भ-भा
प्रतिसरो विवाहादौ धार्यमाणो रक्षाबन्धः तमर्हतीति प्रतिसर्यः (सायणः)

(5) यम उपरमो अन्तकालः प्राणसंयमनं, तत्र भवाय । यद्वा यमस्य पुरं याम्यं, तत्र भवाय - भ-भा

Salutations to you who directly control all souls at the end (of Kalpa), or who permanently reside in the city of Yama as the controllei of Yama himself and in such other forms. We also bow to you, the bestower of welfare to the whole world.

नम उर्वर्याय च खल्याय च ७

\- सौरात्मना चोर्वरा -

स्वाविर्भूतसमस्तसस्य[1]निवहस्यावर्धयित्रे सदा ॥ ११

धान्याद्यात्मतया खलेषु वसते तुभ्यं नमः सर्वदा

Prostrations to you who, as the presiding deity of the sun, increase the growth and yield of various plants in fertile lands; and also to one remaining in the thrashing ground in the form of grains etc. 11

नमः श्लोक्याय चावसान्याय च ८

श्लोके[2] वाच्यतया स्थिताय सततं देवैः सह क्रीडते[3] ।

कल्पान्तेऽप्यविनाशिने श्रुतिशिरोवेद्याय तुभ्यं नमः

Salutations to you who are present in Vedic Mantras as their primary import and hence who always sport with gods (in sacrifices); and we also bow to you who do not perish even at the end of a Kalpa; or who are to be known through the last part of the Vedas-the Upaniṣads.

नमो वन्याय च कक्ष्याय च ९

---

(1) वस्तु - क । उर्वरा सर्वसस्याढ्या भूमिस्तत्र भवाय । सस्यानां (धान्यानां) शोधनस्थानं खलं, तत्र भवाय । भ-भा

(2) श्लोकाः वैदिकमन्त्राः, तत्प्रतिपाद्यत्वेन तत्र भवः श्लोक्यः । अवसानं वेदान्तः, तत्प्रतिपाद्यत्वेन तत्र भवः अवसान्यः (सायणः) अवसानं सर्वार्थोपसंहारो जीवितावसानं वा, तत्र भवाय भ-भा

(3) वैदिकमन्त्रप्रतिपाद्यत्वाद्यागेषु देवैः सह क्रीडनं स्यात् ।

स्वारण्याय[1] च कक्षजाय च नमः - १२

Prostrations to you who appear in dense forests in the form of trees, and also to you who manifest in the form of creepers in thickets. 12

नमः श्रवाय च प्रतिश्रवाय च, १०

- शुश्रूषमाणाय[2] च ॥

वर्णध्वन्युभयात्मना श्रुतिपुराणादौ प्रसिद्धाय च

प्रत्युक्तिप्रतिशब्दरूपिण इदं तुभ्यं नमः-

Prostrations to you who are heard in the form of both the general and articulate sound, or who are famous in the Vedas and Puranas; and also to you who manifest in the form of words of reply or in the form of echo.

नम आशुषेणाय चाशुरथाय च, ११

- शीघ्रगाम् ।

सेनां पालयते च शीघ्रगरथायेदं सदा[3] ते नमः

Prostrations to you, the protector of the army marching fast and also to one whose chariot moves at high speed.

नमः शूराय चावभिन्दते च, १२

शूरश्रेष्ठतमाय[4] दुष्टनिवहान् संभिन्दते ते नमः- १३

Salutations to you, the best of brave warriors and also to one who shatter the hosts of wicked men. 13

---

(1) वन्याय - वृक्षादिरूपेण वने भवस्तस्मै ।..कक्ष्यो लतादिरूपः ।एते भूमेरधिष्ठातुर्भेदाः - भ-भा

(2) श्रूयत इति श्रवः शब्दः । यद्वा सर्वत्र श्रूयमाणाय सुप्रसिद्धाय । प्रतिश्रवाय - प्रतिशब्दरूपाय, प्रतिवचनरूपाय वा । भ-भा

(3) नमः शम्भवे - स्व ।

(4) शूराय - महावीराय, अभीरवे । अवभिन्दते - स्वभक्तविद्विषां अयत्नेन भेत्रे - भ-भा

नमो॑ व॒र्मिणे॑ च वरू॒थिने॑ च, १३

वर्मश्रेष्ठभृते विशिष्टविलसद्देहाय[1] तुभ्यं नमो

Prostrations to you who put on the best armour and also to one who has an excellent shining abode.

नमो॑ बि॒ल्मिने॑ च क॒वचिने॑ च, १४

दिव्योपायनभस्मभाजनशिरस्त्राणादिकं[2] बिभ्रते ।
आगुल्फस्थललम्बिकञ्चुकभृते नित्यं नमोऽस्तु -

Salutations to you, the holder of a divine vessel, or a container of ashes, or the wearer of a helmet with holes, and also to one wearing a coat reaching the ankles.

नम॑: श्रु॒ताय॑ च श्रुतसे॒नाय॑ च, १५

- श्रुति -

ख्याताय श्रुतिविश्रुतायुधभृते विख्यातसेनाय च ।। १४

Prostrations to you who are known through the Vedas (as the source and sustainer of the universe), and also to one having famous armies whose weapons too are described in the Vedas. 14

---

(1) -देहाय - ख, वरूथं सारथेर्गुप्तिस्थानम्, तद्वते, विशिष्टगृहाय वा- भ-भा । वरूथी - गृहोपेतः - (सायणः) ।

(2) बिल्मं बिलं, बिलवत् सच्छिद्रं शिरस्त्राणादि । भस्मभाजनमित्यन्ये । बिल्मं भाजनं इति नैरुक्ताः, तद्वते । कवचिने - अङ्गरक्षावते । यद्वा कवचमागुल्फलम्बि कञ्चुकम् - भ-भा ।

(3) श्रुतिविश्रुताय भवते - क । श्रुतसेनाय विख्यातसेनाय, श्रुतिप्रसिद्धसेनाय वा। यानि तवोक्तान्यायुधानि शरादीनि तान्यपि श्रुतिप्रसिद्धान्येव । - भ-भा ।

ध्यानम्[1] -

शम्भुं शत्रुभयापहं जयमहासाम्राज्यसत्पुत्रदं
गौरीपाणिसरोरुहार्पितमहाहेमाद्रिबाणासनम् ।
बाणालङ्कृतपाणिमेणविलसद्बालेन्दुगङ्गाधरं
शान्तं सुन्दररूपिणं वृषवरारूढं भजे सर्वदा ॥ १५ ॥

इति षष्ठोऽनुवाकः

## Dhyana s'loka for Anuvakas 5 and 6

I always worship Śambhu, calm and beautiful, the bearer of the deer, the shining crescent moon and the Ganges; who, having placed the huge bow of Mahameru in the lotus like hand[2] of Gauri, holds the arrow in his hand (in the form of अर्धनारीश्वर) and is seated on the best of bulls. The Lord contemplated in this form is the remover of fear arising from enemies and is the giver of victory, sovereign power and good sons. 15

### END OF ANUVAKA-6

---

(1) A common Dhyana sloka is given for Anuvakas 5 and 6 since the ऋषि, छन्दस् and देवता for these two Anuvakas are same -नमो भवाय च, नमोज्येष्ठाय चेत्यनुवाकयोः ऋषिः भगवान् शम्भुरेव । छन्दो महाविराट् - भ-भा

(2) The bow in the hand of Gauri and the arrow in S'iva's hand suggest the form of अर्धनारीश्वर vide- ध्यानश्लोक of भटभास्कर -

गौरीकराम्बुजन्यस्तस्वर्णशैलशरासनम् ।
इषुहस्तं रथारूढं नरनारीतनुं स्मरेत् ॥

स्कन्द उवाच -

रुद्रार्थविश्रुतपदार्थसुबोधसार -
वाक्यार्थवैभवमिदं प्रकटानुवादम् ।
पञ्चास्यशान्तश्रुतिविश्रुतपञ्चवाक-
वेदानुवाकमिदमेव महार्थसारम् ॥

अथ सप्तमोऽनुवाकः

नमो॑ दुन्दु॒भ्या॑य चाहन॒न्या॑य च, १

स्कन्द उवाच -

देवेशाय[1] नमोऽस्तु दुन्दुभिमहानिस्वानरूपाय च
प्रौढात्युन्नतवैभवाय वसते देवैश्च सार्धं सदा ।
भेरीवादनदण्डरूपिण इदं तुभ्यं नमः सर्वदा

**Skanda said -**

Salutations to you, the lord of gods, manifesting in the form of the great sound of the kettledrum, or who are highly glorious, or who always reside with the gods, and also to one who assumes the form of the stick with which the drum is sounded.

---

(1) विश्वाधिपत्यं देवस्य प्रतिपाद्य तस्य घोषणमेव कुर्वन्नाह दुन्दुभौ भवाय, दुन्दुभिशब्दात्मने प्रसिद्धविभवायेति यावत् । यद्वा दुन्दुभ्यादिवादित्ररूपाय, यथा "सैषा वाग्वनस्पतिषु वदति या दुन्दुभौ, या तूणवे या वीणायाम् " इति । भ-भा

नमो॑ धृ॒ष्णवे॑ च प्रमृ॒शाय॑ च॒ २

कष्टान्[1] धर्षयते[2] विमर्शकुशलायाशेषविद्यासु च । १६
नित्यं भक्तजने प्रकृष्टकरुणाशीलाय तुभ्यं नमो

Prostrations to you who face the difficulties boldly and also to one who are an expert critic of all branches of learning, or who are always very kind to his devoties by nature. 16

नमो॑ दू॒ताय॑ च॒ प्रहि॑ताय च॒, ३

दौत्यं[3] कर्म च कुर्वते सुमनसां त्राणाय वह्न्यात्मने ।
भक्तेभ्यः कृपया प्रकृष्टधनदायेदं[4] नमो-

Salutations to you who, through your body of fire, discharge the duty of a messenger for saving the gods, and also to you, the giver of excellent wealth to the devotees out of compassion.

नमो॑ नि॒ष॒ङ्गिणे॑ चेषु॒धि॒मते॑ च॒ ४

- बिभ्रते
खड्गं चेषुधिमुत्तमं[5] नम इदं - १७

---

(1) दुष्टान् - ख - who face the wicked boldly

(2) धृष्णवे धर्षणशीलाय, समस्तजगद्रक्षणकुशलाय वा । प्रमृशाय सर्वपरामर्शकुशलाय, पण्डिताय । अपर आह प्रकृष्टशीलः प्रमृशः । सर्वेह्यात्मनः कामाय देवं भजन्ते, श्रेयसे निश्रेयसाय वा । तं स्वार्थमिव स्वयं मन्यमानो देवः तान् रक्षति । भ-भा

(3) दूतस्तु वृत्तान्तज्ञापनकुशलः। प्रहितः स्वामिना प्रेषितः । (सायणः) । भक्तवत्सलतया अग्निरूपेण देवानां दौत्यं कुर्वते वा, यथा "अग्निं दूतं वृणीमहे, अग्निर्देवानां दूत आसीत् "---इति । भ-भा

(4) प्रहिताय - प्रैषकराय, भक्तवत्सलतयैव ---। यद्वा प्रकर्षेण हितः प्रहितः - (भ-भा)

(5) निषङ्गिणे चेषुधिमते च - व्याख्यातौ । निषङ्गिण इषुधिमते तस्कराणां पतये इत्यत्र । । पूर्वं स्तेयकरणविषयतया विशेषणद्वयमाम्नातम् इदानीं तु रक्षणविषयमिति विवेकः । भ-भा ।

Prostrations to you, the wielder of `the sword, and also to the bearer of good arrow-case. 17

नमस्तीक्ष्णेषवे चायुधिने च ५

- तीक्ष्णेषुहस्ताय च

तीक्ष्णानेकवरायुधाय च नमः -

Salutations to you with sharp arrows in hand, and also to you, the possessor of a number of sharp excellent weapons.

नमः स्वायुधाय च सुधन्वने च ६

-सौम्योत्तमस्योचिता -

ऽमोघानेकमहायुधाय शुभसत्कोदण्डहस्ताय च ।

तुभ्यं देव नमोऽस्तु -

Prostrations to you, the possessor of many great unfailing weapons worthy of one of restrained prowess, and also to you, the wielder of the auspicious bow.

नमः स्रुत्याय च पथ्याय च ७

- अनेकविधक्षुद्रार्थसञ्चारिणे[1]

प्रख्याताय चराय च -

Salutations to you walking along many narrow paths for silly purposes, and also to one walking through the highways as a well-known traveller or spy.

नमः काट्याय च नीप्याय च ८

- अचरमहालिङ्गेषु[2] पूज्याय च ॥१८ ॥

(1) अधुना भृत्यरक्षणविषयतया सर्वत्रापि सन्नियन्तेति प्रतिपादयति । स्रुतयः क्षुद्रमार्गाः, पन्थानो महामार्गाः, तत्र भवाय - भ-भा

(2) कुत्सितमटति जलमत्रेति काटो कुल्याप्रदेशः, तत्र जलरूपेण भवः काट्यः । यस्मिन् प्रदेशे पर्वताग्राज्जलं न्यग्भावेन पतति सः नीपः, तमर्हति, तत्र जलरूपेणावस्थितो नीप्यः। - (सायणः)। काटः कूपः । यद्वा कट्यां भवं काटं लिङ्गम् , तत्र भवः लिङ्गे नित्यं सन्निहितायेति यावत् । निर्गता नीता आपो यस्मिन् स नीपः प्रदेशः, तत्र भवाय - भ-भा

निर्मग्नाम्भसि भूतले सदुदके -

Prostrations to you who are worshipped in the immovable lingas, and also to one present in waterfalls and in localities with good water. 18

नमः सूद्याय च सरस्याय च, ९

- शुचौ कर्दमे

विख्यातेषु सरस्सु -

Salutations to you who are present in clean marshy places and also in well-known tanks (in your form of water),

नमो नाद्याय च वैशन्ताय च, १०

- विश्रुतनदीश्रेष्ठासु नादेऽपि[1] च

देवाद्यर्थनिवेशितेऽम्बुनिवहे[2] -

Prostrations to you who are present in famous sacred rivers and also in sound, and in the collections of water specially kept for offering worship to Gods.

नमः कूप्याय चावट्याय च, ११

- कूपेषु गर्तेषु च

Salutations to you who reside in wells and pits.

नमो वर्ष्याय चावर्ष्याय च, १२

सद्वर्षास्वितरेषु[3] -

Prostrations to you who manifest in the form of rain-water, and also to one who are present in water not depending on rain (such as the water in springs and sea).

---

(1) नदीगतजलरूपो नाद्यः । यद्वा नादे भवो नाद्यः, तस्मै - भ-भा (3) सद्वर्षाम्भसि भूतले सदुदके - क

(2) अल्पसरो वेशन्तः, तत्रत्यजलरूपो वैशन्तः । देवतर्पणाद्यर्थं यत्रापो केप्यन्ते ते वैशन्ताः देवखाताः - भ-भा

नमो मेघ्याय च विद्युत्याय च, १३

- मेघनिवहे विद्युत्सु[1] -

Salutations to you present in the clouds and also to you moving with the lightning.

नम ईध्रियाय चातप्याय च, १४

- तप्ताम्भसि

दीप्ताभ्रे[2] स्फुरदातपेषु च -

Prostrations to you who are in bright autumnal cloud or in hot water, and also in the burning sunlight. 19

नमो वात्याय च रेष्मियाय च, १५

- महावाते[3] चरिष्यन्महा -

भूतव्रातयुगान्तदुःसहशिलावर्षोदसंवर्तके[4] ।
ग्रीष्मे[5] वातसमुत्थपांसुनिवहे -

Salutations to you who manifest in the hurricane, and also to one present in the unbearable shower of hailstorm by the Samvarta clouds at the time of deluge, or in the season of summer, or in the column of dust raised by violent wind.

नमो वास्तव्याय च वास्तुपाय च, १६

-वात्यासु[6] वान्यत्र वा (वास्तुष्वथान्यत्रवा)

याः सन्यस्य तदात्मना जगदिदं व्याप्य स्थितायानिशम् ।
यः सर्वाणि सदैव पाति परितो वस्तूनि वास्तोष्पतिः

---

(1) विद्युता सह चरतीति विद्युत्यः, तत्र भवाय - भ-भा

(2) ईध्रं दीप्तं शारदभ्रं नैर्मल्यात् , तत्र भवाय । यद्वा, अग्न्यादिसंप्रयोगात्तप्तजले भवाय - भ-भा

(3) वातेन सह वृष्टो वात्यः - (सायण) । (4) वर्षोग्रसंवर्तके - ख ।

(5) रिष्यन्ति नश्यन्ति भृशं भूतानि यत्रेति रेष्मा, युगान्तकाले पाषाणशर्करावर्षी संवर्तो नाम वातो वाति, स रेष्मा । ग्रीष्मर्तुरिति केचित् । वातोद्धूता पांसवो रेष्माण इत्यपरे - भ-भा ।

(6) The reading वास्तुष्वथान्यत्रवा is suggested on the strength of the commentaries of both सायण and भट्टभास्कर । वस्तु धनं गवाश्वादिपदार्थरूपं, तत्र तत्कार्यरूपेण स्थिताय । वास्तु पातीति वास्तुपः तस्मै, वास्तुस्वामिने वा - भ-भा ।

तस्मै चास्तु (चापि) नमोऽस्तु सर्वभुवनव्याप्ताय सर्वात्मने । २०

Prostrations to you who remain pervading the whole world through your manifestations in hurricanes (in riches like horses cattle etc.) and other things, and also to you who protect every object around you by residing in building-sites as their lord. Prostrations also to you who remain everywhere in the form of every object. 20

ध्यानम् -

रुद्रं भीमकनामकेन मुनिना श्रीहेमकोशेन च
ध्यातं वश्[1]यसुरूपवृष्टिसुतसत्सम्[2]पत्तिमेधाजुषाम् ।
विद्यारोग्यसुधीसु[3]पूज्यपदसत्साम्राज्यमोक्षश्रियां
दातारं द्वीपि[4] (द्विप) चर्मलम्बितजटासर्पादिचिह्नं भजे ॥ २१ ॥

इति सप्तमोऽनुवाकः

## Dhyana s'loka for Anuvaka 7:-

I worship Rudra marked by the tiger-skin (elephant hide), hanging matted hairs and serpents and meditated upon by the sages Bhimaka and Hemakos'a. The Lord contemplated in this form is the giver of power to attract beauty, rain, sons, good riches, intelligence, long life, learning, health, wisdom, high position, sovereign power and salvation.

END OF ANUVAKA 7.

श्रीस्कन्द उवाच -

रुद्रार्थसारपदमन्त्रपदार्थसार
पुण्यानुवाकविशदः खलु षष्ठसप्त ।
विश्वाधिकप्रणतिबोधकसर्वभाव -
युक्तो हि भक्तवरमुक्तिगशक्तिदायी ॥

इति शिवरहस्ये द्वादशांशे एकोनत्रिंशोऽध्यायः

---

(1) पत्यसुरूप - ख (2) सुतसंपत्ति - क (वृत्तभङ्गः) । (3) सुपदसत्साम्राज्य - क (वृत्तभङ्गः)
(4) द्वीपि - क ख - द्विप - instead of द्वीपि is suggested to avoid वृत्तभङ्ग ।

## अथ त्रिंशोऽध्यायः - Chapter - 30

### अथाष्टमोऽनुवाकः ।

नमः सोमाय च रुद्राय च, १

### श्रीस्कन्द उवाच -

लोका[1]नुग्रहकाम्ययाखिलसतां ध्येयाःशिवाः सर्वथा
धत्ते यः शिवशम्भुशङ्करमुखानेकाभिधानास्तनूः ।
तस्मै देव नमोऽस्तु यःकरुणया प्रादुर्भवन्नग्रतो
भक्तान्पाति सहोम[2]या प्रतिदिनं देवान्पितॄन्मानवान् ॥ १ ॥
अन्यानप्यमृतेन वर्षयति यः सोमात्मना, यज्वनः
सर्वानभ्युदयेन योजयति यः सोमादियागात्मना ।
यश्च द्रावयति स्वयं प्रणमतां नित्यं रुजं प्राणि[3]नाम्

ANUVAKA-8

### Skanda said -

We offer salutations to you, the Lord who, out of your desire to bless the worlds, assume several auspicious bodies under different names such as Śiva, Śankara, Śambhu etc. which can be conveniently contemplated upon by the wise and who, out of compassion appear before the devotees along with Uma and protect them, or who every day make the gods, Manes (Pitṛs), human beings and others pleased with the shower of nector through your form of Soma, the moon; or who lead the sacrificers to prosperity through your form of Soma Yaga and other Yajnas. We also offer our salutations to you who are always engaged in driving away the afflictions of all living beings who are devoted to you. 1

---

(1) अत्र देवस्य अनुग्रहरूपाणि प्रदर्श्यन्ते । रुद्रपशुपत्यादिशब्दानां पुनरभिधान देवस्यानुग्रहरूपतामपि प्रख्यापयितुम् । भ.भा. (3) योगिनाम् - क ।

(2) उमया सहितः सोमः, तस्मै, प्रसादकाले हि देवः सोमः सन्निधत्ते । चन्द्रात्मने वा, तदात्मा हि देवः पितृदेवमनुष्यान् तर्पयति । सोमयागात्मने वा, तेन हि रूपेण पुरुषानभ्युदये योजयति भ .भा

नमस्ताम्राय चारुणाय च २

तस्मै देव नमोऽस्तु नित्यमुदये काश्मीरताम्राय च ॥ २ ॥
सिन्दूरारुणकान्तये तदनु ते सूर्यात्मनेदं जगद्
द्युत्या[1] द्योतयते[2] च -

Salutations to you who, in the form of the sun provide light to this world with your lustre (rays) red like saffron while rising and crimson like Sindura afterwards. 2

नमः शङ्गाय च पशुपतये च ३

- शं गमयते[3] प्रापय्य भक्तं जनम् ।
सर्वान्पालयते पशून् विधिमुखान् चोराररितापव्यथा -
रोगेभ्यः कृपया च ते नम इदं - ३

Prostrations to you who lead the people to happiness and also to you, the Lord who protect, out of mercy, all ignorant beings beginning with the creator himself, from thieves, enemies, sorrows, pains and diseases. 3

नम उग्राय च भीमाय च ४

- ते दुष्प्रधर्षाय च ।
दुःखाद्यैर्यजमान[4]मूर्तय इदं येभ्यः समस्तं जगत्
जन्म[5]व्याधिजराविपत्तिमरणादिभ्यो बिभेतीदृशम् ।
यस्मा[6]द्विभ्यति तेऽपि, ते भगवते तस्मै वियन्मूर्तये
तुभ्यं देव नमो -

Salutations to you, the unassailable by sorrows in your form as the sacrificer, and also to you in your form of

(1) उत्पाद्योत्तमयते च - क । उत्पाद्योद्धरत इत्यपि पाठान्तरम् ।
(2) आदित्यात्मना हि देवः प्रबोधनादिना जगदनुगृह्णाति कार्याणि च जन्तूनां साक्षात्करोति । - भ - भा
(3) शं सुखं गमयतीति शङ्गः - भ - भा (4) पवमान - क ।
(5) उग्राय - पापरोगादिभिर्नरकाद्यैश्च स्वयमनभिभवनीयाय । यजमानमूर्तेरधिष्ठाता अयम् । भ - भा ।
(6) भीमाय च - तेषां पापरोगादीनामेव भयहेतवे, बिभेत्यस्मादिति भीमः । येभ्यो जगद्बिभेति तेऽपि पापरोगादयः त्वत्तो बिभ्यतीति भावः । अयं चाकाशमूर्तेरधिष्ठाता - भ - भा ।

space(आकाश) of which even those things that cause fear to the whole world such as birth, diseases, old age, calamities, death etc., are afraid of. 4

नमॉ अग्रे वधायॅ च दूरे वधायॅ च् ५

- यदा खलजनाः[1] साधून् जिघांसन्ति ये ।
आविर्भूय तदग्रतः प्रथमतस्तेषां निहन्त्रे च ये
दूरे त्वामपहाय सर्वजगदाराध्यं कुमार्गे स्थिताः
तेषामेव दुरात्मनां शुभतरे काले प्रहर्त्रे नमो -

Prostrations to you who appear before the wicked men who torment the good and first strike them hard; and also to you who strike at the right time those at a distance who ignore you, the one worthy of worship by the whole world, and tread on the evil path.

नमॉ हन्त्रे च हनीॅयसे च, ६

हन्त्रे हन्ति बलेन येन महता हन्तव्यमाशु क्षणात् ॥ ५
तद्रूपाय पशून् क्रताविव महासंहारकाले बल-
स्यात्यन्तातिशयेन[2] हन्त्यपि च यो ब्रह्मेन्द्रमुख्यामरान् ।
अत्ता यश्च[3] चराचरस्य जगतस्तस्मै नमोऽस्तु प्रभो

Salutations to you who manifest as the killer and depending on your supreme strength, kill those who deserve to be killed quickly as animals in sacrifices, and also our salutations to you who kill the gods with the creator and Indra at their head at the time of final destruction with your great strength and devour the whole world consisting of the movables and immovables. 5

---

(1) अखिलजनाः - क । (2) अतिशयेन हन्त्रे हनीयसे - भ - भा (3) यस्य -ख ।

नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यः, ७

रुद्राः पान्ति जगन्ति ये च परितो वृक्षादिरूपाः परे
ये रुद्रा हरिता[1]भकेशनिवहास्तेभ्योऽपि नित्यं नमः ॥ ६ ॥

Prostrations to the Rudras who, assuming the form of trees, protect the worlds and also to other Rudras appearing in the form (of trees with) thick dark- green foliage. 6

नम॑स्ता॒राय॑, ८

संसारार्णवमाशु तार[2]यति यस्तारात्मकः सर्वथा
ब्रह्म ब्रह्मविदां चिरादुपदिशंस्तस्मै नमस्तेऽस्तु -

Salutations to you who, in the form of Taraka Mantra (Pranava), or Daksinamurti, or (Visvanatha of Kaśi), make the people cross the ocean of Samsara (cycle of births and deaths) by giving instructions about the true nature of Brahman and how to realise it, (or by imparting Taraka Mantra).

नमः॑ श॒म्भवे॑ च मयो॒भवे॑ च॒ ९

- यद्
दुःखापायमयं सुखं यदपि तद्भोग्यं परत्रेह च ॥ ७
साक्षित्वेन तयोः शमित्यपि मयश्चेतीह विख्यातयो -
र्द्रष्ट्रे नित्य[3]सुखात्मने नम इदं -

(1) हरितवर्णानि केशसदृशानि पर्णानि येषां ते हरिकेशाः तथाविधा ये वृक्षाः कल्पतरुप्रभृतयः - (सायणः) देवो हि स्वाभिमतेन येनकेनचिदाकारेण वृक्षादिरूपेणाप्याविर्भूय जगदनुगृह्णाति - भ - भा
(2) तारयति संसारसागराज्जन्तूनिति तारः रुद्रः, तस्मै, प्रणवरूपाय वा । अत्र हि (काश्यां) जन्तोः प्राणैरुत्क्रममाणस्य रुद्रस्तारकब्रह्म व्याचष्टे इति जाबालोपनिषदि - भ - भा ।
(3) शं सुखं भावयत्युत्पादयति इति वा शम्भुः । मयः सुखं भावयति इति मयोभूः । — एकं विषयसुखमपरं मोक्षसुखमिति विवेकः (सायणः) । शं सुखमस्माद्भवतीति शम्भुः सुखहेतुः । —- सुखं भावयतीति वा शम्भुः, सुखप्रकाराणां द्रष्टा । मयोऽपि सुखमेव । ऐहिकामुष्मिकरूपेण वाभ्युदयनिःश्रेयसरूपेण वा भेदः । दुःखशमनरूपं सुखं शमित्युच्यते, इतरत्तु मय इति - - भ - भा ।

Prostrations to you who, by nature are eternal bliss and are the observer as witness (and the source) of शम् - the pleasure which is the absence of sorrow, and मयः - the pleasure to be enjoyed (through the senses) in this and in the other world. 7

नमः शङ्करायं च मयस्करायं च, १०

\- श्री शङ्कराख्याय[1] च

सर्वस्मै जगते करोति कृपया यः शं मयश्चानिशं

तस्मै तेऽस्तु नमः-

Salutations to you called Śankara by name and also to you who mercifully (and habitually) give the two kinds of happiness - शं, the pleasure of salvation and मय, the pleasure of this and the other world.

नमः शिवायं च शिवतराय च, ११

\- शिवाय[2] च गुणातीताय शुद्धाय च ॥ ८

इच्छाशक्ति[3]वियुक्तचिद्घनशरीरायाव्ययायात्मने

पूर्णानन्दतराय पूर्णसुखदायाजस्रपूर्णाय च ।

यत्ते क्षेपक ईशते दिशति च श्रेयः प्रजानामसौ

शान्तिं याति समस्तमङ्गलगुणग्रामैकसीमाय ते ॥ ९

इच्छाशक्तिमुपैति निर्मलतरश्चास्ते प्रकृत्येति च

व्याचष्टे शिवनाम यस्य विभवं तस्मै परस्मै नमः ।

---

(1) सर्वप्राणिभ्यः सुखं ताच्छील्येन करोतीति शङ्करः, शमिधातोः संज्ञायामित्यच् । शङ्करदेवो हि ताच्छील्यात् तत्संज्ञः । - भ - भा । पित्रादिरूपेण शं लौकिकसुखं करोतीति शंकरः । आचार्यशास्त्रादिरूपेण मोक्षसुखं करोतीति मयस्करः । साक्षात्सुखकारित्वमेताभ्यां पदाभ्यामुक्तम् । एतन्मुखेन कारयितृत्वं पूर्वाभ्यां पदाभ्यामिति विवेकः (सायणः)

(2) शिवोऽकल्मषो निस्त्रैगुण्यः । सर्वात्मना कल्याणः शिवः, सुप्रसिद्धः, तस्मै नमः। तथा देवः शिवंकरत्वाच्च शिव इति । "समेधयत यन्नित्यं सर्वार्थान्सर्वकर्मसु । शिवमिच्छन् मनुष्याणा तस्माद्देवः शिवः स्मृतः" (महाभारते) । अतिशयेन शिवः शिवंकरः शिवतरः । अविपर्ययेण वा शिवं करोति सः शिवंकरः शिवतरः, तस्मै नमः - भ - भा (3) शक्त्यविमुक्त - ख ।

लोकानामविपर्ययेण कुरुतेऽत्यन्तं शिवं यः सदा

तस्मै चास्तु नमः - १०

Salutations to you, the auspicious, pure and above the three qualities (of Satva, Rajas and Tamas), or, free from attributes, who are absolute consciousness with no creative urge, who are imperishable, whole, absolute (unmixed) bliss and ever full, the giver of supreme happiness to the people and the acme of all auspicious virtues, who assume the "will" (इच्छाशक्ति) to create, and yet remain extremely pure (being unaffected by the act of creation or its results), and whose greatness is explained by the name Śiva. Also our salutations to you who invariably do only the maximum good to the people. 9-10

नमस्तीर्थ्याय च कूल्याय च, १२

- प्रयागबदरीकेदारकाश्यादिषु

तीर्थ्यो[1] यो हि मरुद्वृधादिसरितां कूलं च -

Prostrations to you who are present at (and sanctify)) the sacred places such as Prayaga, Badari, Kedara, Kaśi etc., and also to one who are present on the banks of sacred rivers such as Marudvṛdha etc.,

नमः पार्याय चावार्याय च, १३

- गोदावरी-

कृष्णासिन्धुसरस्वतीमुखसरित्पारं[2] तदर्वाक्तटम् ।

नित्यं सन्निहिताय तेषु जगतां त्राणाय तुभ्यं नमः

---

(1) इदानीमाधारविशेषवशेन देवो जगदनुगृह्णातीत्याह - तीर्थं प्रयागादि, तत्र भवाय, कूल कावेर्यादीनां
तीरं तत्र भवाय । भ - भा

(2) नद्यादीनां पारं परतीरं, तत्र भवाय । अवार्याय - अवरमर्वाक्तीरं, तत्र भवाय । कश्चिदाह - संसारविषयं तीर्थादिकम् । तीर्थस्थानीयाः समयाचाः शैवादिकाः तीर्थानि, तत्र भवाय । तत्र स्थित्वा जगदनुगृह्णातीति - भ-भा । पारे संसारसमुद्रस्य परतीरे मुमुक्षुभिः ध्येयत्वेनावतिष्ठत इति

Prostrations to you who are always present on the far off (opposite) banks of Godavari, Krishna, Sindhu, Saraswati and such other rivers and also to one present on the near banks to protect the people.

नमः प्रतरणाय चोत्तरणाय च, १४

प्राप्यैवोत्तम[1]योनिजन्मगुणमुत्कर्षं क्रमात्प्राणिनाम् ॥ ११ ॥

मग्नानां भवसागरे करुणया चोन्मज्जयित्रे भवा -

दूर्ध्वं चोद्धरते नमः -

Prostrations to you who lift up, out of compassion, those who have sunk deep into the ocean of worldly existence (Samsara) even after getting birth in a good stock and possessing excellent virtues, and also to one who lead them out (of Samsara). 11

नम आतार्याय चालाद्याय च, १५

- क्रमवशात्पारं भवाम्भोनिधेः

प्राप्तान् कर्मवशेन जन्म[2]निवहानावर्त[3]मानान्पुनः ।

कर्तुं प्रेरयते धियस्तदनु तान् मध्ये भवाब्धेश्चिरं[4]

सर्वान् भ्रामयते नमोऽस्तु भवते - १२

Salutations to you who induce the intellect of those who, having reached the other shore of the sea of Samsara, have again resumed the cycle of births and deaths as a result of their own (remaining) actions, to do further actions and thus make them drift in the ocean of Samsara. 12

नमः शष्प्याय च फेन्याय च, १६

---

(1) उत्तमासु योनिषु जन्म प्रकर्षः । तरणं प्लवनम् । संसारप्रतरणे प्लवरूपत्वम् । उत्तरणाय - अस्मात्संसारादुत्तरणहेतवे - भ - भा (2) जन्तु - ख ।

(3) संसारतीरं प्राप्तस्यापि कर्मशेषेण पुनरावर्तनं आतारः । अलादः - सर्गः । भूयो भूयः संसारसागरे आवर्तरूपेण परिभ्रमणमालादः, तत्र भवाय - भ - भा (4) परं - क ।

\- पुण्येषु दर्भादिषु
क्षुद्रप्राणिकुलेषु बालतृणवत्स्वल्पप्रमाणेषु च ।
फेने फेनवदल्पकालमथवा जीवत्सु जन्तुष्वपि

Prostrations to you who are present in the sacred grass like Darbha, (Durva) and others, or in the multitudes of low creatures that are small in size like tender grass, and also to one present in foam, or in creatures which are short-lived like foam.

नमः सिकत्याय च प्रवाह्याय च, ॥ १७ ॥

एवं तत्सिकतासु तद्वदधिकक्षुद्रेष्वसारेषु[1] च ॥ १३
नानापुण्यनदीप्रवाहनिवहे तत्तुल्यभूतिष्वपि
श्रेष्ठप्राणिषु -

इत्यष्टमोऽनुवाकः

Salutations to you who are present in sand, or in very small and insignificant creatures like sand, and also to one present in the waters of various sacred rivers or in equally sacred and superior beings. 13

END OF ANUVAKA-8

अथ नवमोऽनुवाकः

नम इरिण्याय च प्रपथ्याय च, १

\- चेरणेऽपि[2] च तथा नित्यक्रियामानिषु ।
प्रख्याते पथि च प्रकृष्टतरसन्मार्गानुवर्तिष्वपि

ANUVAKA-9

Prostrations to you who are present in barren land with saline soil, or in those who boast of being always active, and also to you present in those who walk along the main road, or those who follow the virtuous path.

---

(1) नीरेष्वपि - ख (2) इरणमूषरं तत्र भवाय । भ-भा

नमः किंशिलाय च क्षयणाय च, २

क्षुद्रानेकशिलादिकर्कशतरे देशे कुशीले जने ।। १४
वस्तव्ये विजने जनेष्वपि तथा योग्येषु[1] चैतेषु यः
सर्वेष्वेवमनुग्रहाय जगतामास्ते विभुः सर्वतः ।
तस्मै तेऽस्तु नमः -

Prostrations to you who are present in rough grounds with collections of small pebbles, or in men of bad conduct; and also to one who are present in lonely places fit for residence, or in the people who are fit for being resorted to. Prostrations to you, the all-pervading Lord who always thus reside in all objects for the welfare of the world.

नमः कपर्दिने च पुलस्तये च, ४

- कपर्दिन इदं सत्कुन्तलायानिशं[2]
भक्तानां पुरतः स्थिताय च नमो -

Salutations to you possessed of thick matted hairs and also to you having beautiful locks of hairs, or who always remain in front of the devotees.

नमो गोष्ठ्याय च गृह्याय च, ४

- गोष्ठे गृहाभ्यन्तरे ।। १५ ।।

Prostrations to you who remain in cowsheds and also inside residential buildings. 15

---

(1) अन्य आह - संसारिविशेषाः सर्व एते शष्पादय इति । शष्पाः शष्पकल्पाः स्वल्पप्राणाः । फेनाः फेनकल्पाः स्वल्पायुषः । सिकताः सिकताकल्पा अतिक्षुद्राः । प्रवाहाः प्रकृष्टवाहाः महाविभूतयः । इरिणाः इरिणकल्पाः (ऊषरकल्पाः), शून्यशक्तयः । प्रपथाः प्रकृष्टमार्गवर्तिनः । किंशिलाः कुत्सितशीलाः । क्षयणाः क्षयशीलाः । तेषु सर्वेष्वविशेषेणानुग्राहकतया वर्तते, सर्वानुग्राहकत्वादिति भावः - भ - भा ।

(2) पुलस्तयः कुन्तलाः, तद्वते, प्रसादकाले कदाचित् कपर्दी, कदाचित्कुन्तलवानसौ देव आगच्छति । केचिदाहु : - सर्वदा सर्वेषां पुरस्तिष्ठतीति पुलस्तिः (रलयोरभेदः) । एवं महानुभावोऽपि सर्वदा सुलभ एवेति दर्शितम् - भ-भा

नमस्तल्प्याय च गेह्याय च, ५

तल्पेऽनल्पतरेऽतिशिल्पविविधप्रासादमध्ये तथा

Salutations to you who lie on excellent beds spread on big cots and also to one residing in big mansions of various designs of architecture.

नमः काट्याय च गह्वरेष्ठाय च, ६

काटे[1] पर्वतगह्वरे -

Prostrations to you residing in difficult forest areas (thickets etc.) and also in mountain caves.

नमो ह्रद्य्याय च निवेष्प्याय च, ७

- ह्रदवरे नीहारवारिण्यपि ।

Salutations to you present in deep tanks and also in dew drops.

नमः पांसव्याय च रजस्याय च, ८

सत्पांसौ विषमे रजस्यपि -

Prostrations to you remaining in fine dust and also in big particles of earth.

नमः शुष्क्याय च हरित्याय च, ९

- तथा शुष्केऽपि चार्द्रेऽपि च

Salutations to you who are present in dry as well as in wet objects.

नमो लोप्याय चोलप्याय च, १०

देशे लुप्ततृणादिके च परितः पूर्णे तृणाद्यैः स्थले ॥ १६

---

(1) कुत्सितमटतीति कटं कण्टकितलतादि, तत्पूर्णतया दुष्प्रवेशत्वं प्राप्नोति (इति) वा दुर्गमारण्यविशेषः काटः, तत्र भवः काट्यः (सायणः) Earlier in काट्याय च नीप्याय च (अनुवाक 7-8) सायण has explained काट as कुत्सितमटतिजलमत्रेति काटः, अल्पप्रवाहयोग्यः कुल्याप्रदेशः । भट्टभास्कर explained there - काटः, कूपः, यद्वा कट्यां भव काटं लिङ्गम् etc. Here he says - व्याख्यातमेतत् । कूपस्थजलरूपेण वा जगदनुगृह्णाति ।

Prostrations to you who are present in places without grass and also in places with thick growth of grass and shrubs. 16

नमँ ऊर्व्याँय च सूर्म्याँय च, ११

उर्व्यां, मध्यबिलाकृतिप्रतिकृतौ[1] -

Salutations to you who are present on the ground and also in hollow statues.

नमँः पर्ण्याँय च पर्णशद्याँय च, १२

- पर्णेषु पर्णव्रजे[2]

Prostrations to you who are present in leaves and also in heaps of dry leaves.

नमोँऽपगुरमाँणाय चाभिघ्नते च, १३

शूरेष्वस्ति शिवोऽयमेवमभितः सच्चित्सुखांशैः स्वयम् ।
भूतं भावि च वर्तमानमनुगृह्णात्येष[3] बुद्ध्या सतां
भक्त्या भावयतां स एव सुलभस्तस्मै नमस्कुर्महि ।। १७
हन्तव्यानभिहन्तुमायुधवरैरुद्यम्य[4] संधावते
दुष्टांस्तैरभिनिघ्नते नम इदं-

Salutations to you, Śiva, who are present in warriors holding their weapons high, who favour the past, present and the future of those good men who meditate upon you with knowledge and devotion through your form of reality, consciousness and bliss and who are easily attainable to the devotees. 17

---

(1) सूर्मिरन्तःसुषिरा प्रतिकृतिः, तत्र भवाय - भ - भा । शोभनाः ऊर्मयो यस्यां नद्यां सूर्मिः, तत्र भवः (सायणः)

(2) शुष्काणां पर्णानां संघातः पर्णशद्यः, तत्र भवाय - भ - भा

(3) गृह्णातीह - ख ।

(4) अपगुरमाणाय आयुधमुद्यच्छमानाय, निग्राह्यान् हन्तुम् । अभिघ्नते - हन्तव्यानाभिमुख्येन हिंसते - भ - भा । अपगुरमाणः उद्यतायुधः । अभिघ्नन् प्रहरन् (सायणः)

Also our salutations to you who rush forward with raised weapons to strike those who deserve to be punished, and (also) to you who kill the wicked with those weapons.

नमं आक्खिदते चं प्रक्खिदते चं, १४

- कांश्चित्[1]सदा पीडनैः

कांश्चिच्चापि खलान् बलस्य महतः स्वस्य प्रकर्षेण चा-

त्यन्तं खेदयते समस्तजगतां क्षेमाय योगाय च ॥ १८ ॥

Prostrations to you who, for the welfare of the whole world, harass some wicked men and severely strike others with all your superior might (according to the nature of their guilt.) 18

ध्यानम् -

स्वात्मानं हृदि भावयन्तमनिशं रुद्रं स्वसारूप्यदं

सांम्राज्यादिरिपुक्षयादिनिखिलाभीष्टप्रदं ध्यायताम् ।

सप्तद्वीपमहाधिपत्यदमनन्तोद्यद्दिनेशद्युतिं

भूतेशं भुजगेन्द्रभूषिततनुं कण्ठे कलङ्कं भजे ॥ २९ ॥

## Dhyana s'loka for Anuvaka 8 and part of Anuvaka 9 upto and inclusive of "प्रक्खिदते च":-

I worship Rudra who meditates on himself in his heart, who is brilliant like countless suns rising together and who is the lord of the Pramatha Ganas (the constant followers of Śiva), and whose body is adorned by the king of serpents. The Lord meditated upon in this form is the giver of all desires such as his own Sārupyam, sovereignty, destruction of enemies and lordship over . : earth consisting of seven islands. 19

(1) अभिपीडनेन कांश्चिदीषत्खेदयते । प्रक्खिदते - कांश्चित् प्रकर्षेण पीडयते यथापराधम् । भ - भा

नमो॑ वः किरि॒केभ्यो॑ दे॒वाना॒ꣳ हृद॑येभ्यः १९

ईषत्[1]पुष्पफलप्रदाः क्रतुभुजो नानाधिकारास्त्रय -
स्त्रिंशन्मानमितैर्गणैस्त्रिगुणितैः स्वांशैर्गणेशान्वितैः ।
प्रत्येकं परिवारिताः स्वसदृशैरग्नेश्च वायोस्तथा
सूर्यस्योग्रविभूतयः क्रमयुता एकादशैकादश ॥ २० ॥

संघीभूय वसन्ति येऽधिपतयो भुव्यन्तरिक्षे द्युषु
त्रिष्वन्यैः सह षड्भिरेवममरैस्सर्वैः सह प्राणिषु ।
त्रीणि त्रीणि शतानि चोपरि नवत्रिंशच्च देवा भव -
न्त्यंशा जीवघनस्य पङ्कजभुवो वह्नेः स्फुलिङ्गा इव ॥ २१

ते देवाः कथमीश्वराः, कथमपि ध्यानेन योगेन वा
रुद्रान् वः परमेश्वरान् भगवतो जानन्त्यचिन्त्यानपि ।
जानीमः कथमल्पकाः वयमथापि -

---

(1) In verses 20, 21 and nearly three-fourth of verse 22, the author is giving a detailed account of the number and nature of the Devas mentioned in the Mantra - "देवानां हृदयेभ्यः" The Interpretation of the Mantra "नमो वःकिरिकेभ्य" etc. begins with the words 'स्वेच्छयेदं जगत्' at the end of the third line of verse - 22. भट्टभास्कर first explains the Mantra and then gives a detailed account of the number etc. of the Devas which is quoted below for clear understanding -

देवाश्च पृथिव्यन्तरिक्षद्योस्थाः अग्निवायुसूर्याः सविभूतयः एकादश । --- ततस्त्रिषु लोकेषु त्रयस्त्रिंशद्भवन्ति तेषामेकस्य विभूतिभूताः शतं देवाः । तेषां च त्रयस्त्रिंशत्संख्यास्त्रायो गणाः अग्निवायुसूर्यप्रधानास्ते संभूयैकोनशतं भवन्ति ।एकशततमो गणस्य प्रधानभूतः । एवं पृथिव्यामेकादश प्रधानभूताः, ते च त्रयस्त्रयः क्रियमाणाः त्रयस्त्रिंशद्भवन्ति ते च त्रयस्त्रिंशत्संख्याः त्रयस्त्रिंशद्भवन्ति गणाः । गणाधिपतिश्चैकादशः । उक्तंच - "त्रयो देवा एकादश त्रयस्त्रिंशाः सुराधसः" इत्यादि । एता एव देवता अग्नेर्विभूतयो वायुसूर्यविशेषौ चाग्न्यनुविधायिनौ द्वौ । एवं सर्वे सम्भूय एकोनचत्वारिंशत्सहितं शताधिकं सहस्रम् । तावन्तोऽन्तरिक्षस्था वायुविभूतयो देवास्तत्राग्निसूर्याविशेषौ द्वौ, सूर्यानुविधायिनौ द्वौ, एवं सर्वे सम्भूयैकोनचत्वारिंशत्सहितं शतत्रयाधिकं सहस्रत्रयं देवाः भवन्ति । श्रूयते च - "त्रीणि शता त्रीणि सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन्" इति । सर्वेऽपि चैते नानावेषाधिकारा इष्टापूर्तभागधेया महतो भूतस्य विस्फुलिङ्गाः । इयमेकस्मिन् ब्रह्माण्डे प्रक्रिया भ-भा.

There exist the consumers of the sacrificial offerings who discharge various duties and give little fruits for meritorious deeds. They are called Devas who are thirty three in number - Eleven being the powerful forms (उग्रविभूति) of Agni, eleven of Vayu and eleven of Surya, on earth, sky and heaven respectively. These thirty three are surrounded by groups (Ganas) of one hundred members each formed of their own parts (Vibhutis) who separately exist on earth, in the sky and in heaven. The three main Devas - Agni, Vayu and Surya are accompanied by the other two in their respective regions and thus with those six, there are a total number of three thousand three hundred and thirty nine Devas who reside in all living beings on earth, in the sky and in heaven and who are parts of the lotus-born creator of great energy like sparks of fire. Even these great Devas, somehow with great difficulty realise through abstract contemplation or Yogic meditation, you-the Rudras who are the most powerful and incomprehensible forms of the Supreme Lord. How can we, the small creatures understand you? Yet-

- स्वेच्छयेदं[1] जगत्

कुर्वद्भ्यः कृतमेतदेव नितरां विस्तारयद्भ्यः सदा ॥ २२

देवानां हृदयेषु योगजधिया तेषां वसद्भ्यो यथा -

प्रज्ञाभक्तिवशेन शन्तमहृदा रुद्रान् नमस्कुर्महे ।

प्रारब्धाखिलकर्मबन्धविनिवृत्यर्थं च -

(1) नमो वः किरिकेभ्य इत्यारभ्यानुवाकान्तमेको मन्त्रः । अयं च मन्त्रः प्रत्यक्षकृतः, युष्मच्छब्दप्रयोगात । एवं देवस्य लीलाविग्रहमूर्त्याधारगुणक्रियाजात्याकृतिभेदभिन्नाः प्रत्येकं प्रति नमस्कृताः । इदानी ते समूहरूपेण नमस्क्रियन्ते । देवं नमस्कृत्येदानीं तदनुचरा नमस्क्रियन्त इति केचित् । प्रसिद्धवेषाकारा देवस्य नमस्कृताः । अज्ञातस्वभावा अन्ये जगतां शासितारः गुप्ता वर्तन्ते । त इदानी नमस्क्रियन्त इत्यपरे । देवानां हृदयेभ्य इति देवानां हृदयवर्तनमेव वयं जानीमः इति नमस्कारयोगाद्धि सर्वेषामेतद्विशेषणम् । कुर्वन्त्युत्पादयन्ति स्वेच्छया लोकानिति किरयः, त एव किरिकाः । देवानां हृदयेभ्यः - देवानामेव हृदये परिवर्तमानेभ्यः । तात्स्थ्यात्ताच्छब्द्यम् । देवा एव युष्मान् जानन्ति । यद्वा देवानां हृदये अनुग्रहायाविर्भवद्भ्यः । स्वाभिमतसिद्धये तैः सदा स्मर्यमाणेभ्य इति यावत् । यद्वा देवानां हृदयभूतेभ्यः तेषां विशेषेणाप्ततमेभ्यः । भ-भा । किरन्ति भक्तेभ्यो धनानीति किरिका उदारा रुद्रावताराः, ते च देवानां हृदयभूताः सर्वदेवप्रियत्वात् (सायणः)

We offer salutations to you who create the universe at your free will and expand it. Also our salutations to you, the Rudras who reside in the hearts of the Devas being contemplated upon by them, with our hearts extremely peaceful owing to our knowledge and devotion to you, for getting rid of all bondage caused by (our own) actions including Prārabdha-the action which has already started giving fruit.

नमोॅ विक्षीणकेभ्यॅः, १६

- पापात्मन[1] -

[2]श्चाधिव्याधिजरादितस्करमहासर्पादिनक्रादिभिः ॥ २३

क्षिण्वद्भयो विविधं नमः -

Prostratiions to you who torment the sinners in many ways such as causing mental afflictions and diseases, and through old age, thieves, serpents, crocodiles and others. 23.

नमोॅ विचिन्वत्केभ्यॅः, १७

- तनुभृतां कर्मानुरूपं फलं

दातुं दुष्कृतिनस्त्विमे सुकृतिनश्चेमे किलेत्यन्वहम् ।

लोकानुग्रहकाम्ययापि च विचिन्वद्भयो नमो वो -

Salutations to you, the Rudras, who examine and find out the doers of bad and good deeds in order to give quite appropriate fruits to their actions with the intention of doing good to the world.

नमॅ आनिर्हतेभ्यॅः; १८

- यथा -

मर्यादं[3] च सुनिश्चितं च नियमेनायुःक्षये प्राणिनाम् ॥ २४

हन्तृभ्यश्च नमः -

---

(1) पापात्मनाम् - ख (2) नमो विक्षीणकेभ्यः - अभक्तानां व्याधिचोरनरकादिभिर्विचित्रां हिंसां कुर्वद्भ्यः । क्षिणु हिंसायाम् । विविधं क्षिण्वन्तीति विक्षीणकाः । - भ - भा

(3) हननं हतं हिंसा । आकारो मर्यादायाम् निरिति निश्चये । मर्यादया निश्चयेन च हन्तृभ्य इत्यर्थः । भ-भा ।

Prostrations to you, the Rudras who justly and definitely take away the lives of all living beings when their period of life has ended. 24.

नमॅ आमीवत्केभ्यॅः ॥ १९ ॥

- कथञ्चिदपि सर्पेयुः क्वचित्पापिनः
प्रायेणेति हि शासितुं तनुभृतः सर्वान् समन्तात्सदा[1] ।
नीरन्ध्रं सविजृम्भितं जगदिदं व्याप्य स्थितेभ्यो नमः
श्रीरुद्रंनुचराश्च गुप्तमपरे ये सन्ति तेभ्यो नमः ॥ २५ ॥

Salutations to you, the Rudras who remain pervading the whole universe without leaving even a little space so that the sinners may not slip away from your sight and you can always punish or command everybody. Also our salutations to your followers who remain invisible. 25

ध्यानम् -

कन्यापुत्रसुवर्णराज्यनृपवश्यादिश्च इभ्याः स्त्रियः
शत्रोर्नाशधनायुरुत्तमयशः पौत्राश्च गोऽजादिकम् ।
साम्राज्यं प्रदिशन्तमात्मनि भजन्तं तं सहस्राक्षपद्
श्रोत्रघ्राणशिरोभिरावृतममुं विश्वेश्वरं चिन्तये ॥ २६ ॥

इति नवमोऽनुवाकः

इति शिवरहस्ये द्वादशे अंशे त्रिंशोऽध्यायः

## Dhyana śloka for the Mantra beginning with "नमो वः किरिकेभ्यः":-

I contemplate on the lord of the universe having thousands of eyes. legs, ears, noses and heads, who meditates on his own self within himself and who is the giver of daughters, sons, gold, kingdom; favour of kings, beautiful women,

(1) आमीवत्केभ्यः - समन्ताद्विजृम्भमाणेभ्यः । अन्ये ब्रुवते - समन्ताद्धिंसन्द्भय इति । इतरेतरव्यावृत्तौ न कश्चिदवकाशो यतो दुरात्मानोऽपसर्पेयुरिति भावः - भ - भा ।

destruction of enemies, wealth, long life, good reputation, grandchildren, cows, sheep, etc., and sovereign power.
26

END OF ANUVAKA 9

END OF CHAPTER-30.

अथ शिवरहस्ये द्वादशांशे एकत्रिंशोऽध्यायः
दशमैकादशानुवाकयोरवतरणभाष्यम् -

स्कन्द उवाच -

व्यक्ताव्यक्ततया चराचरमयं विश्वं तदन्तर्बहि -
र्व्याप्ता विश्वभवा भवस्थितिकृतो विश्वात्मका विश्वपाः
विश्वस्मादधिकाश्च विश्वपतयस्तन्निग्रहानुग्रह -
व्यग्रात्युग्रसुशान्तविग्रहकृतो रुद्रास्त्वदंशाश्च ये ॥ १
तद्रूपेण वयं नतिस्तुतिशतैस्त्वां प्रीणयन्तोऽधुना
सुप्रीतं वरदं कृपालुमभयं[1] संप्रार्थयामः शिवम् ।

CHAPTER 31 IN SIVARAHASYA.

Introduction to Anuvakas Ten and Eleven.

## Skanda said -

This universe consisting of the movables and the immovables is pervaded inside and outside, both in its subtle and gross forms, by Rudras who are the cause of its origin, sustenance and destruction, who themselves are the universe and its protectors and are even beyond the universe and the masters of everything in it. Assuming very fierce and also peaceful forms, these Rudras and their partial incarnations are engaged in punishing and rewarding everyone (according to one's Karma. O Lord! the most auspicious, compassionate

(1) एवं विश्वरूपेण देवं स्तुत्वा, अतः परमभयं याचते द्राप इति - भ - भा

and the giver of boons, propitiating you in all these forms with hundreds of prayers and prostrations, and now that you are pleased, we beg you, the compassionate, (to give us) freedom from fear. 1

### अथ दशमोऽनुवाकः

द्रापे अन्धसस्पते दरिद्रन्नीललोहित ।
एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो
मो एषां किञ्चनाममत् । १

बिभ्राणः कवचं[1] विभाति भगवान् यः पापिनां[2] दुर्गतीः[3] (दुर्गतिः)
प्रत्येकं खलु दुःखदुःसहमहासंसारदारिद्र्ययोः ।
योऽसौ प्रापयिता[4] समस्तभुवनध्वंसात्मिकाया गतेः
शश्वत्कारयिता च योऽखिलजगन्नाथो -

### ANUVAKA-10

Meaning of the word द्रापे -

O Lord of the whole universe! the most powerful, you shine brightly wearing an armour, you lead the sinners individually to the most unbearable miseries of worldly life and poverty, or you cause the final destruction of the whole universe. 2

- अन्धो[5]ऽपि स्वयम् ॥
निःस्वश्चागतिरेक एव निखिलालक्ष्यस्वरूपः सदै -
वास्ते तस्य दरिद्रवज्जगदिदं यन्नामरूपात्मकम् ॥ ३
सर्वं स्थूलशरीरमेव यदिदं -

---

(1) द्रापिरिति कवचनाम । उपचारेण तद्वति वर्तते - भ-भा (2) प्राणिनाम् - क
(3) द्राप इति - निकृष्टायाः यातनानुभवात्मिकायाः दारिद्र्यात्मिकाया वा गतेर्विकर्मणा गमयितः । यद्वा सर्वस्य लोकस्योपसंहारलक्षणायाः शोच्याया गतेः कारयितः, द्रा कुत्सायां गतौ, आपयिता आपिः । द्राणं द्रा, सैव कुत्सिता गतिः, तस्याः आपयिता द्रापिः । - भ-भा (4) पापहतान् क ।
(5) अद्यत इत्यन्धः, अन्नं, तस्य पते, दरिद्रा दुर्गतौ । स्वयमन्धसस्पतिरपि दुर्गतस्वभाव इति - भ-भा

Meaning of the words अन्धसस्पते and दरिद्रत् -

Though the lord (giver) of food (to others) you remain penniless, lonely and helpless, with your true nature not realised by anybody. This world which consists of mere names and forms has no attraction for you as for a poor man. In fact, this universe is nothing but your own gross bod .

- यस्य स्वहृद्देशतः[1]
यः सम्भूय च नीललोहित इति ख्यातः शिरः पञ्चमम् ॥
उद्धृतस्य विभेद धातुरगजाविष्ण्वोश्च[2] वामं वपु -
र्यो दत्वा सविलासलोहिततनुर्निर्दोषरूपश्च यः ॥ ४
कण्ठे[3] नीलमतीवलोहितनिभं चान्यत्र गात्रं शिवं
धत्ते यः सततं -

Meaning of the word नीललोहित -

O Lord well-known as Nilalohita (of blue and red form) who came out of your own heart and cut off the fifth head of the creator who violated the code of conduct, or, having given the left half of your body to the daughter of the mountain (Parvati) and to Lord Visnu, your body is now gracefuly red and faultless, or who bear a body that is blue in the neck and red in all other parts and is the most auspicious. 4

- दयामयतनो स त्वं प्रसन्नोऽधुना ॥
एतान्[4] पुत्रकलत्रमित्रपरिवारादीनिमान् गोमहि -
ष्यश्वादीन्निहतान् पशूंश्च नमतां भीतान्[5]कुधा मा कृथाः ॥ ५

---

(1) हृद्देशतः - क । देवस्य हृदयादाविर्भूतो रुद्रो नीललोहितः, यो हि भिक्षाटनादिकं चकार, तस्यार्धं नीलमर्धं लोहितं, नरनार्यात्मकत्वात् नामरूपात्मकत्वाद्वा - भ - भा

(2) In अर्धनारीश्वर and शङ्करनारायण forms.

(3) अन्य आह - कण्ठे नीलमन्यत्र लोहितमिदं रूपमिति । यद्वा निलीनं नितरां निरस्तं कालुष्यमस्येति नीललोहितः भ-भा

(4) एवं भगवन्तं संबोध्याभयं याचते - एषां पुरुषाणाम् - भ-भा

(5) मा भेः - मा भीषयथाः, मा हिंसीः - भ-भा

दुःखाद्यैश्च कदापि मा गमयतादार्तिं[1] प्रसादात्तव
स्वामिन् किञ्चिदपि ज्वरादिकमिमान्[2] मा बाधतां क्वापि च ॥

O Lord; kindness incarnate! Now that you are pleased, may you desist from causing fear and death through your anger to our sons, wives, friends, servants, cows, buffaloes, horses and such other animals, and by your favour, let not afflictions, fever and such other diseases trouble them in any way. 5

ध्यानम् -

प्रध्यातं पुलहेन रुद्रमनिशं भूताभिचारादिक -
द्रोहारिष्टभयापहं धनमहासिद्धिप्रदं ध्यायताम् ॥ ६
आगुल्फासितकञ्चुकं[3] डमरुकाश्लिष्टं[4] लसत्कुन्तलं
ध्यायेत्कुण्डलितश्रवं[5] सुतिलकं सन्नूपुरं भैरवम् ॥

## Dhyana śloka

One should contemplate on Rudra in his form as Bhairava, wearing a black coat reaching his ankles, holding the Damaru, possessing shining locks of hair, adorned with rings in the ears and Tilaka (on the forehead) and wearing excellent anklets. The God contemplated in this form by the sage Pulaha is the remover of fear from evil spirits and injuries caused by sorcery, and also the giver of wealth and

---

(1) मा अरः - ऋच्छतिरयमाङ्पूर्वः व्यसनकर्मा अत्र केवल एव तमर्थमाचष्टे । इमान् मा अरः - मा आर्तिं अर्पयः, आर्तिं मा जनीत्यर्थः । पुरुषव्यत्ययेन वा एषां मध्ये कश्चिदपि माऽरत् आर्तिं मा गमदित्यर्थः ।- भ - भा

(2) किञ्चन आममत् - किञ्चिदपि ज्वरादिकमेषां पश्वादीनां माममत्, पश्वादीन् त्वत्प्रसादेन मा हिंसीदित्यर्थः । "रुजार्थानां भाववचनानामज्वरेः" इति कर्मणि षष्ठी । "अम रोगे" ण्यन्तात् लुङि च्लेश्चङादेशः, सन्वद्भावश्छान्दसः ।- भ - भा

(3) आगुल्फं सितकञ्चुकं- क ।

(4) डमरुकाद्युक्तं - क डमरुकोद्युक्तं - ख ।

(5) कुण्डलिपुत्रं - क । The reading of 3,4 and 5 in thè text are from the ध्यानश्लोक of भट्टभास्कर with necessary change in विभक्ति ।

great powers (Siddhis) to those who contemplate.[1] 6

या तेँ रुद्र शिवा तनूः शिवा विश्वाहँभेषजी ।

शिवा रुद्रस्यँ भेषजी तयाँ नो मृड जीवसे ॥ २

या ते तत्पुरुषस्य रुद्र शिवदा पूर्वा तनुर्योगिनां
सर्वं यच्छति, या च दक्षिणतनुः संसाररुग्भेषजी ॥ ७ ॥
प्रक्षीणाखिलकर्मभिन्नहृदयग्रन्थिप्रनष्टाखिला-
ज्ञानं छिन्नसमस्तसंशयमपास्तद्वैतमस्तारिकम् ।
ज्ञानं प्रत्यगभिन्नचिन्मयपरब्रह्मैकलक्ष्यं परं
सर्वान् बोधयतः सदा मुनिजनान् चिन्मुद्रया भद्रया ॥ ८ ॥
रुद्रस्यादिगुरोः सतां शिवमयी, या स्यात्तनूर्ध्वगा
तस्य ज्ञानघनात्मिका तव गुणातीता शिवाख्याऽमला[1] ।
नित्यात्यन्तिकबन्धमुक्तिफलदा चेशानमूर्तिः सदा

---

(1) The following six lines in Śardulavikridita which resemble a Dhyana Sloka with no subject or predicate, are quite irrelevant in the context and seem to be interpolated in the text -
त्वङ्गत्तुङ्गतुरङ्गसंवृतमहामातङ्गमध्यस्फुरद्भावत्प्रौढरथायुतावृतलसज्जाम्बूनदस्यन्दनम् ।
अध्यास्य ह्यवति (who?) क्षितिं रथिवरैः माणिक्यसिंहासने
ब्रह्मेन्द्रादि निजाश्रितैर्जनवरैः, संपूज्य तं मानवः ॥ इन्द्रब्रह्मपदे च संयमफलं साक्षाच्च मोक्षश्रियं
सालोक्यादि चतुर्विधं च भजतां तद्भाग्यसाम्यं फलम् (?)
Generally there is similarity of ideas in the Dhyana slokas of स्कन्ददेव and भट्टभास्कर but these six lines do not convey the ideas of the Dhyana Sloka of भट्टभास्कर to the next Mantra यातेरुद्र etc. to which स्कन्ददेव has not given a Dhyana sloka. Hence these lines cannot be treated as the Dhyana for the next Mantra. (Editor)

(1) सदा - क ।

तामिस्ते तिसृभिस्तनूभिरभितस्त्वां सज्जनैकार्थिनः[1] ॥ ९ ॥
यावन्मानुषभोगलाभजनितानन्देन दीर्घायुषः
त्वामाराधयितुं शिवं सुखय नः शम्भो दयाम्भोनिधे ।
ज्ञानैश्वर्ययशोदयादिसुगुणैः सर्वैरनन्तैर्बलैः
संवृद्धः कृपया सकृत्प्रणमतामप्येकभक्त्या सताम्[2] ॥ १० ॥

O Rudra!, the auspicious one and an ocean of compassion! with your three bodies-(1) the body facing the east known as Tatpuruṣa which is the giver of happiness and everything to the Yogins; (2) the body facing the south, the medicine for the disease of worldly life of birth and deaths (Samsara), with which you,the first preceptor impart instruction through the mystical sign of Chinmudra (चिन्मुद्रा) to all the sages on the highest knowledge of the supreme Brahman that resides within in the form of pure consciousness; the knowedge that dispels all doubts, breaks the knots of the heart, destroys the illusion of duality and wipes off all the internal enemies (कामक्रोधादिकं) along with the accumulated actions (कर्म); and (3) the body of the lord facing upward called Iśana which is solid knowledge unaffected by three Gunas (सत्व, रजस् and तमस्) and the most auspicious called Śiva-with these three bodies you get your glory enhanced by assuming your special virtues such as lordship, knowledge, fame, mercy and such other merits and also assuming your many limitless powers, you give us even when saluted only once with devotion, long life for

(1) हे रुद्र, या ते तव शिवकरी सुखकरी तनूः तया नो मृडय इति वक्ष्यमाणेनान्वीयते, तयास्माकमपि शिवं कुरु इति । तत्र द्विधा शिवत्वं देवस्य तन्वाः सर्वदुःखनिवृत्तिभेषजत्वादात्यन्तिकदुः-खनिवृत्तिभेषजत्वाच्च । तत्र प्रथममात्रपरिग्रहे धनपुत्रस्वर्गादिसांसारिकसुखमात्रप्रदानेन देवो मृडयेत्, द्वितीयमात्रपरिग्रहे तु निःश्रेयसलक्षणमेव देवः शिवं कुर्यात् तस्मादुभयविधशिवप्राप्तिमाशासान आह - शिवा विश्वाह भेषजीति-विश्वान्यहानि विश्वाहाः, तेषु भेषजी, विश्वेष्वहस्सु भेषजभावं न जहातीति । भेषजान्तरं तु देशकालशरीरावस्थादिभेदेन कदाचिदेव भेषजं स्यात् । भ . भा.

(2) भट्टभास्कर treats this second ऋक् as a separate मन्त्र and after giving ऋषि छन्दस् and देवता gives the ध्यानश्लोक thus - द्रुतचामीकरप्रख्यं शक्तिपाणिं षडाननम् । मयूरवाहनारूढं स्कन्दरूपं शिवं भजे ॥

worshipping you and happiness that can be enjoyed in this world. 7, 8, 9 & 10

इमा रुद्राय तवसे कपर्दिने क्षयद्वी-
राय प्रभरामहे मतिम् । यथा नः
शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं
ग्रामे अस्मिन्ननातुरम् ॥ ३ ॥

यः संवर्धयिता[1] य एव सकलब्रह्माण्डविध्वंसना-
विर्भावोद्वहनैकधृष्णु परमं धत्ते बलं केवलम् ।
योऽसौ दिव्यकपर्दभृद्यमभितस्ते वीरभद्रादयो
वीराश्चाधिवसन्ति[2] यस्य महता वीर्येण धीरोद्धताः ॥ ११

क्षीयन्ते निखिलाः खलाः, भगवते रुद्राय तत्ते प्रियां
नित्यं तां बिभृमो मतिं वयमियं (इमां) या मानसार्चामयी[3] ॥
सर्वोत्कृष्टफलार्थिभिर्मुनिजनैः सर्वेश्वरःसर्वदा
ध्यातव्यः शिव एव किञ्च बहुधा यष्टव्य[5] एवानिशम् । १२

स्तोतव्यः परिकीर्तनीय इति चाविच्छेदनीया मति -
स्तां लब्ध्वा शिवमेव सर्वमितरत्संत्यज्य सर्वात्मना ॥
ध्यायन्तः[6] सततं भजाम इह नःशं शङ्करस्य प्रभो -
स्तस्यैतत्कृपया यथा स्वपरिवाराणां च किञ्चाधुना ॥ १३

---

(1) तवसे - वर्धयित्रे, तु इति सौत्रो धातुर्वृध्यर्थः, ततो ण्यन्तादसुन् यद्वा तवो बलं तद्वते । भ.भा.
(2) क्षियन्ति निवसन्ति वीरा विक्रान्ता यस्मिन् यमाश्रित्य सः क्षयद्वीरः, यद्वा "क्षि क्षये" भौवादिकः । क्षयन्ति विनश्यन्ति वीरा यं प्राप्य सः क्षयद्वीरः । पूर्वस्मिन् "क्षि निवासगत्योः" तौदादिकः । भ. भा.
(3) इमां मतिं ईदृशीं बुद्धिं मानसपूजारूपां रुद्राय प्रभरामहे प्रकर्षेण धारयामः । रुद्रं सर्वदा पूजयाम इति यावत् । मतिरिति स्तुतिनाम । सर्वदा रुद्रं स्तुत्या आराधयाम इत्यर्थः - भ. भा.
(4) सर्वथा - ख ।
(5) स्तुतिभिर्हविषां प्रदानैश्च तद्विषयां मतिमविच्छिन्नां कुर्म इत्यभिप्रायः । यद्वा रुद्र एव स्तोतव्य उपासितव्यः प्रश्नयितव्यो द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति । तद्विषयामेव मतिं सर्वदा बिभृम इति । भ. भा.
(6) ध्याने यत् - क

ग्रामेऽस्मिन् निवसत्यशेषमपि[1] यद् यत्प्राणिजातं च त-
त्पुष्टं पुष्टमनातुरं च सुखितं भूयात्तथोपास्महे ॥

We offer our mental worship to you, O Rudra! who nourish all the worlds or who possess the power to create, sustain and destroy the whole circle of words; who bear the divine matted hairs; around whom reside those powerful Virabhadras and other heroes who derive their strength from you; or by whose power all the wicked perish. O Lord Rudra! we hold the view that is dear to you, and having got the definite understanding that you, Siva alone are fit to be contemplated, to be propitiated in sacrifices, to be praised with Stotras and to be extoled by sages who pray for the best of all fruits, we also contemplate and worship whole-heartedly you, Śiva, alone leaving every other God in such a manner that, by your favour and the favour of your followers, may we get happiness and may all living beings in this village become well nourished, happy and free from diseases. 11, 12, 13.

मृडा नो रुद्रोत नो मयस्कृधि
क्षयद्वीराय नमसा विधेम ते ।
यच्छं च योश्च मनुरायजे पिता
तदश्याम तव रुद्र प्रणीतौ ॥४॥

स्वामिन् रुद्र नमस्क्रियाभिरनिशं स्तोत्रैर्हविर्भिः क्षय -
द्वीरं त्वां वयमादरात्परिचरेमास्मासु कुर्वन् कृपाम् ॥ १४

(1) अथ प्रभरणं विशिष्यते - यथा यादृग्विधे प्रभरणे सति नोऽस्माकं स्वभूताय द्विपदे पुत्रादये चतुष्पदे पश्वादये शं सुखं असत् स्यात् । पुनश्च विशिष्यते - यथा च प्रभरमाणेष्वस्मासु विश्वमपि प्राणिजातं यदस्मदीयं न भवति तदपि पुष्टमनातुरं च स्यात् । क्व? अस्मिन् ग्रामे यत्र वयं वसामः । आहुश्च पौराणिकाः - रुद्राध्यायी वसेद्यत्र ग्रामे वा नगरेऽपि वा । न तत्र क्षुत्पिपासाद्याः दुर्भिक्षव्याधयोऽपि वा - भ. भा.

दारापत्यधनादिभिश्च[1] सुखितानस्मान्कुरुष्वापि च
ब्रह्मानन्दमयं च यत्तदपि नः श्रेयः कृपाम्भोनिधे ॥
यद्वा प्रार्थनया नतार्तिहरण[2] त्वय्येव भक्तिः स्थिरा
वाञ्छातीतफलप्रदा[3] भवतु नः सर्वात्मना सात्विकी ॥ १५

Meaning of the first half of the Mantra-

O Rudra! our Lord! With prostrations, praises and offerings into the fire (Havis) we always worship you, the destroyer of those who oppose you. Showing compassion for us, make us happy along with our wives, children, wealth and other belongings. Further, O ocean of kindness! give us the supreme happiness identical with the bliss of Brahman. Or by this prayer, O remover of afflictions of the devotees! let us have firm, whole-hearted and pure (Satvik) devotion for you which would give fruits beyond our desires and expectations. 14-15

संसारज्वरदुःसहार्तिहरण, स्वामिन् तवानुग्रहः
पूर्णो नः किमसाध्यमस्ति भजतां तस्मात्वमस्मत्पिता ।
स्रष्टृत्वेन नियोजितः स भगवान् लोकेश्वरः स्वस्य यत्
प्राप्तानागत[4]दुःखहेतुशमनं वाञ्छन् त्वदाज्ञाक्रमम् ॥ १६
नातिक्रामति यत्तथैव च वयं लप्स्यामहे यन्मनुः
स्मर्ताऽसौ कृपया समस्तजगतां क्लेशप्रहाणक्रमम् ॥
कात्स्न्र्येनोपदिदेश सर्वजगतां स्रष्टा विधिर्मानयन्
आदत्ते च वयं च दुर्लभमपि प्राप्स्यामहे तत्तथा ॥ १७

---

(1) नो अस्मान् मृडय - पुत्रधनादिसमृद्ध्या सुखितान् कुरु । उत अपि च नोऽस्माकं मयः सुखं निरतिशयानन्दात्मकं कृधि कुरु भ. भा
(2) अनया नयभिदा शम्भो यमारे ऽ धुना - क
(3) भक्तिः सर्वफलप्रदा - क ।
(4) शं शमनमागतानां दुःखहेतूनाम् ।योः - पृथग्भावः । अनागतानां दुःखानामनुन्मेषःपृथक्भावः - भ. भा.

Meaning of the second half of the Mantra -

O Lord! The remover of unbearable afflictions caused by the fever of Samsara, what is not attainable by us who worship you and have received your favour in full? So you are our father. Even God Brahma to whom you have entrusted the job of creation does not violate the laws laid down by you for removing the causes of the past and future sorrows. In the same manner, the laws laid down by Manu, out of compassion, for completely removing the sufferings of the whole world, are accepted by the creator on account of his regard for Manu. Let us also, by your favour, obtain and follow them, though they are difficult to attain and follow. 16-17

ध्यानम् -

देवं गोधनवर्धनं प्रणमतां हस्त्यश्वरक्षाकर
माण्डव्येन महर्षिणार्चितमुमाकान्तं प्रसन्नाननम् ।
चन्द्रोद्भासितशेखरं मुनिजनैः संस्तूयमानं प्रभुं
ध्यायेद्रुद्रमभीष्टदं प्रणमतां सिंहासनाधिष्ठितम् ॥ १८

## Dhyana sloka for the ṛks 2, 3 and 4

One should contemplate in his mind, Rudra, the husband of Uma, seated on a throne with a smiling face and his head adorned with the moon, who is worshipped by the sage Mandavya and is extoled by the ascetics, who grants all desires, increases cattle-wealth and protects the elephants and horses of those who salute him. 18

मा नो॑ म॒हान्त॑मुत मा नो॑ अर्भ॒कं
मा न॒ उक्ष॑न्तमुत मा न॑ उक्षि॒तम्
मा नो॑ वधीः पि॒त॒रं मोत मा॒तरं॑
प्रि॒या मा न॑स्त॒नुवो॑ रु॒द्र॒ री॒रि॒षः ॥ ५ ॥

स्वामिन् रुद्र मदीयवंशमखिलं वृद्धं युवानं शिशुं
गर्भस्थं पितरं च मातरमिहास्माकं रुषा मा वधीः
मा हिंसीश्च प्रियास्तनूर्बहुविधव्याध्यादिवातातपैः
शस्त्रास्त्राग्निमहाहिवृश्चिकरिपुव्याघ्रोग्रसिंहादिभिः ॥ १९ ॥

O Lord Rudra! we pray you not to kill in your anger the members of our family such as the old, young, chidren, those in the womb, our father and mother; and also not to strike and cause pain to our dear bodies with diseases, violent winds, excessive heat, weapons, missiles, fire, snakes, scorpions, tigers, fierce lions and such other beasts. 19

## ध्यानम् -

सर्वाभीष्टफलप्रदं प्रणमतां देवं दयाशेवधिं
देवेशं हृदि देवरातमुनिना ध्यातं गणेशावृतम् ।
तं नन्दीश्वरवन्दितं सुविमलं बालेन्दुचूडामणिं
बालादित्यसमानकान्तिमनिशं श्रीरुद्रमेवं भजे ॥ २० ॥

## Dhyana sloka -

I worship Lord Śiva (Rudra), the giver of all desires to his devotees, the treasure of kindness, the leader of the Devas, (one) contemplated in the mind by the sage Devarata, surrounded by the leaders of the Deva Ganas and (or) the Pramatha Ganas, saluted by Nandikesvara, extremely pure, having the moon as his crest-jewel and brillliant like the rising sun. 20

मा नस्तोके तनये मा न आयुषि
मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्र भामितो वधी -
र्हविष्मन्तो नमसा विधेम ते ॥ ६ ॥

स्वामिन् रुद्र वपाहविश्चरुपुरोडाशाज्ययागैर्मुहुः
प्रीतं ते नमसा च संप्रति वयं संपादयन्तोऽधिकाम् ॥
देवं त्वां करुणानिधिं परिचरेमास्मासु कुर्वन् कृपां
भक्तानामपराधिनामपि च नः पुत्रेषु[1] पौत्रेषु वा ॥ २१ ॥
गोष्वश्वादिषु चास्मदायुषि रुषा हिंसां विभो मा कृथाः
किञ्चास्मत्कुलवर्धनानि हरणे[2](?)दाने च धर्मे धने ।
बालान् स्तन्यपरांस्तथौरसगणान् मा नो वधीः किं तु तान्
वर्धिष्णूंश्चिरजीविनश्च कुरुतान्नः प्रार्थनेयं विभो ॥ २२ ॥

O Lord Rudra! the repository[3] of compassion, we serve you with the offerings of Vapa, Havis, Charu, Purodasa and ghee in sacrifices and also with salutations and thus make you more pleased with us so that, showing kindness towards us, your devotees, please do not in anger cause any afflictiion to our sons, grandsons, cows, horses and also to our lives even if we have offended you. Moreover, please don't strike at those which nourish and promote our families like gift, religious merit and wealth and also our small children and young sons; but make them possessed of prosperity and long life. O Lord ! this is our request ( to you). 21-22

ध्यानम् -

स्वात्मानं हृदि भावयन्तमनिशं रुद्रं चिरायुर्महा -
मार्गक्षेमसुवृष्टिपुत्रकनकश्रीकन्यकादिप्रदम् ।
त्वामेकादशधा विभक्तवपुषं तेजोनिधिं शूलिनं
चन्द्रालङ्कृतमौलिमिन्दुधवलं शान्ताकृतिं भावये ॥ २३ ॥

---

(1) तोके - पुत्रे तनये - तत्पुत्रे च मा रीरिषः मा हिंसां कृथाः । तद्विषये रोगादिभिर्हिंसको मा भूः द्वितीयार्थे वा व्यत्ययेन सप्तमी । तोकं तनयं च मा हिंसीरिति....भामितः कोपितः भाम क्रोधे, ण्यन्तात् निष्ठा । यद्वा संजातक्रोधो भामितः ।...... नमसा नमस्कारेण ते तव विधेम - परिचरेम । पूर्ववत् षष्ठी द्वितीयार्थे वा - त्वां परिचरेमेत्यर्थः - भ भा

(2) It is not clear what is meant by हरणे ।

(3) Vapa etc. are different offerings into the fire in Vedic sacrifices.

## Dhyana sloka -

I contemplate on Rudra in a calm and peaceful form meditating upon himself in his own heart, white like the moon, holding the trident, adorned by the crescent moon on the head and one who has divided his body into eleven forms. The Lord meditated upon in this form is the giver of long life, good conduct, welfare, good rains, gold, wealth and daughters, etc. 23

आ॒रात्ते॑ गो॒घ्न उ॒त पू॑रुष॒घ्ने क्ष॒यद्वी॑ -
राय सुम्न॒मस्मे ते॑ अस्तु ।
रक्षा॑ च नो॒ अधि॑ च देव ब्रू॒ह्यधा॑
च न॒ः शर्म॑ यच्छ द्वि॒बर्हा॑ः ॥ ७ ॥

अश्रान्तं पुरुषान् पशूंश्च नितरां ते निघ्नतः सर्वदा
प्रीतिर्हिंसनगोचराऽतिभयदं रूपं च दूरेऽस्तु तत् ॥
विश्वत्राणपरायणस्य जगतां मास्मासु भूत्तस्य या
चण्डीशाद्यवनेऽस्ति साऽस्तु मयि सा प्रीतिः सदास्मास्विह ॥ २४
भक्तानां शिवदं सदाशिव शिवं रूपं च यत्तच्छिवा -
यास्माकं पुरतः परिस्फुरतु ते किञ्चाधुनास्मान् विभो ।
भृत्यान् रक्ष सपक्षपातमधिकं दाक्षिण्यपूर्वं वचो
योगक्षेममहं वहामि भवतामित्यादराद् ब्रूहि नः ॥ २५
श्रीरुद्रार्थजशर्म यच्छ भगवन्नामुष्मिकं चैहिकं
कस्तादृक् सुखवर्धनः प्रणमतां देवस्त्वदन्यः प्रभो ॥ २६ ॥

O Lord, May your delight in hurting men and cattle without respite, and that terrible form which causes great fear to the people, remain far away. Let them not be directed towards us. You who are engaged in protecting the whole universe, show to us that pleasure and form which you have shown while

saving Chandisa and other followers. O Sadaśiva! (one always auspicious) may your auspicious body that is the giver of happiness to the devotees, appear before us for our happiness; and now, O Lord, save us, your servants, showing special attachment and speak to us the kind words of courtesy -"I will look after your welfare". O Lord! Give us the happiness to be enjoyed here, in this world and also in the other world that is derived by the understanding of the meaning of SRI RUDRAM. Who else is there, except you, that can give us, the devotees, such happiness. 24, 25 -26.

ध्यानम् -

आयुः श्रीसुखवर्धनं मुनिवरेणाराधितं चात्रिणा
देवं तं सुहिरण्यसन्निभलसन्मूर्तिं प्रसन्नाननम् ।
बिभ्राणं ज्वलनं ज्वलन्तममलं कुर्वाणमग्रे स्वयं
देव्यास्ताण्डवमादरात्सुरगणैरासेव्यमानं भजे ॥ २७ ॥

इति शिवरहस्ये एकत्रिंशोऽध्यायः

**Dhyana sloka -**

I salute the Lord who increases the span of life, wealth and happiness, who is worshipped by the great sage Atri, whose body shines like pure gold, who bears a smiling face, who holds the fire and shines brightly, who performs the Thandava dance in front of Devi Uma and who is served by the groups of gods with devotion. 27

END OF CHAPTER 31 IN S'IVARAHASYA.

अथ शिवरहस्ये द्वादशांशे द्वात्रिंशोऽध्यायः

स्तुहि श्रुतं गर्तसदं युवानं मृगं न
भीममुपहत्नुमुग्रम् । मृडा जरित्रे रुद्र
स्तवानो अन्यं ते अस्मन्निवपन्तु सेनाः ॥ ८ ॥

अस्मानेव सदावितुं करुणया स्थित्वा रथे[1] भूमये
यो देवस्त्रिपुरान् पुरा समवधीत् , योगीन्द्रहृत्पङ्कजे ।
मार्ताण्डस्य च मण्डले त्रिभुवनव्याप्तप्रभामण्डले
नित्यं व्योम्नि परेतभूमिषु च यः प्रादुर्भवन् तिष्ठति ॥ १
यः सर्वश्रुतिषु श्रुतेषु निखिलश्रुत्यन्तसारेषु च
नित्यं विश्रुतदिव्यकीर्तिगुणचारित्रो युवा यः सदा ।
सिंहव्याघ्रमुखातिघोरमृगवद्भीमाकृतिर्दुर्हृदां
यो वध्यानखिलानजस्रमुपसंहर्तुं खलानुद्यतः ॥ २
यश्चान्यानभिभूतशक्तिरसकृच्चोग्राकृतिर्मृत्युवद्
विघ्नघ्नन्ति खलांश्च यस्तमनिशं देवं महेशं स्तुहि[2] ।
इत्यात्मानमहं[3] प्रसादविमुखं त्वां प्रेरयामि स्वयं
भक्त्या स्तौमि च भक्तभीतिहरणं - ३

CHAPTER 32 IN S'IVARAHASYA

Meaning of the first half of the Mantra-

O my heart ! Praise him, the supreme Lord who, in order to save us, out of compassion, stood on the chariot of the earth and destroyed the three cities (of the demons); who aways resides in the lotus-hearts of the Yogins, or who manifests himself in the disc of the sun, or in the mass of rays that spreads all over the three worlds, or who resides in the sky, or in the cremation ground; whose divine glory, virtues and deeds are sung in the Vedas, Sastras and Upanishads; who always remains young but appears to the evil-minded as one possessing fierce forms like those of the

---

1. गर्तसदं - गर्तमिति रथनाम, तत्र सीदति तिष्ठतीति त्रिपुरदाहादाविति । यद्वा हृदयाभ्यन्तरं गर्तम् । केचिदाहुः - गिरति कबलयति विश्वमिति गर्तम् विश्वस्यावरकः तेजोविशेषः । अन्ये आहुः - गीर्यन्ते अग्निना भक्ष्यन्ते प्रजा अत्रेति गर्तं स्मशाने इति । शब्दवानाकाशो गर्तमित्यपरे - भ - भा
2. विग्रहस्यात्युग्रत्वाद्भीत्या पूर्वार्धेन देवं परोक्षीकृत्याह स्तुहि इति ।
3. आत्मन एवायमन्तरात्मनः प्रैषः, भिद्यते च वाक्यम् । हे मदीयान्तरात्मन् स्तुहीति । भ - भा

lion, tiger or other wild beasts; who is bent on the destruction of the wicked that deserve to be killed and who actually kills all the vile persons assuming a terrible from that resembles the form of Mṛtyu (God of death) and possessing a strength which cannot be overcome by others. I urge you (O Lord) who are my inner self and yet are not inclined to show any favour to me, to remove the fear of the devotees and I also praise you with devotion. 1-2 & 3

- यो रुद्र तुष्टो भवान् ॥

स्तोतव्योऽपि सुरेश्वरैर्हरिविरिञ्चाद्यैः प्रपन्नः[1] किल

यन्नोऽयं जन इत्यनन्यशरणं मामप्यतीवाल्पकम् ।

स्तोतारं सुखय प्रसादसुमुखः किञ्चास्तु किञ्चित्परं

भूतप्रेतपिशाचराक्षसमुखाश्चोरा भवत्सैनिकाः ॥ ४

अस्मत्तोऽन्यमधिक्षिपन्तु सततं रक्षन्तु नः सर्वदा

सर्वस्माद्दुरिताद्भयाच्च भगवन् नित्यं प्रसादात्तव ॥

Meaning of the second half of the Mantra-

O Rudra, though you are praised by the prominent Gods like Vishnu, Brahma and others and you are pleased with them, I beg you to be pleased with me, an insignificant creature for the only reason that I have surrendered to you and have no other refuge. With a cheerful face showing your favour, may you gladden me who praise you. Moreover, let your terrible soldiers such as Bhuta Ganas, ghosts, goblins, demons etc. punish others and not us, and by your favour, let them always protect us from all calamities and fears.* 4

---

प्रसन्नः किलापन्नोऽयं - क ।

स्कन्ददेव does not give a Dhyana sloka to this Mantra while भट्टभास्कर gives the following ध्यानश्लोक - उद्यद्भास्करकोटि प्रकाशमादीप्तदहनमूर्धानम् । अम्बरनिलयं भीमं ध्यायेदभयं शिवं सुरौघनुतम् ॥

परिणो रुद्रस्य हेतिर्वृणक्तु परि -
त्वेषस्य दुर्मतिरघायोः । अवस्थिरा
मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय
तनयाय मृडय ॥ ९ ॥

दुर्ज्ञेया विधयो विभिन्नमतिभिर्नीताश्च भिन्नार्थतां
छिन्न[1]छिन्नविभिन्नविस्मृतमहाशाखाः सहस्रायुताः ॥ ५
वेदान्ता विहितास्तथा बहुविधास्ते द्रव्यकालक्रिया -
मन्त्राः स्वल्पतरं च जीवितमतीवाल्पा च शक्तिर्मतिः ।
दुर्विज्ञेयतरं सुदुष्करमतः कर्माखिलं तद्भवद् -
भक्त्या[2] नः सफलं भवेदिति यथाप्रज्ञं[3] यथासम्भवम् ॥ ६
यज्ञात्माखिलयज्ञभुक् त्वमिति हि त्वां देव यक्ष्यामहे
यज्ञैरेव वपाहविश्चरुपुरोडाशाज्यवन्तो वयम् ।

Introduction to the Mantra- "परिणो रुद्रस्य" etc.

The Vedic injunctions are very difficult to understand. Men of different views have interpreted them in different ways. Thousands are the main branches of the Vedas, many of which are lost, broken into fragments or forgotten. The Vedantas too are many and varied. So are the materials, times, rituals and Mantras prescribed. But life is short and too small are our intelligence and power (to understand and to perform the Vedic rites). Though it is very difficult to know and perform all Vedic rites we believe that, by our devotion to you, the rites performed by us according to our understanding and ability will bear fruit. Therefore, with the knowledge that you are the Yajna and the enjoyer of the offerings in Yajna (Havis), we propitiate you by performing sacrifices with the offerings of Vapa, Havis, Purodasa and ghee etc. 5, 6.

1. छिन्नच्छिन्न - क। 2. शक्त्या - क 3. यथा प्रज्ञा यथा शं भव - क

दम्भाहङ्कृतिदर्पपूर्णहृदया देवान् यजन्ते परान्
ये तेषामघमिच्छतस्तव मुहुर्हन्तुं प्रदीप्ताकृतेः ॥ ७
उग्रा निग्रहरूपिणी स्थिरतरा या दुर्मतिर्मा कृथा -
स्तामस्मासु कदाप्यतो मतिरियं हेतिश्च रुद्रस्य ते ।
भक्तान्दूरत एव देव[1] परितः सा वर्जयत्वद्य नः
सर्वान् किञ्च निमुञ्च चापमधुना ज्याबद्धमस्मत्कृते ॥ ८
सृष्ट्वा विश्वमिदं महेश्वर तदेवानुप्रविश्य प्रजा -
श्चाविच्छिन्नतया समस्तजगति स्रष्टुं स्त्रियां योनिषु ।
वीर्यं सिञ्चसि यत्प्रजापतिरतो मीढ्वान् पिता त्वं हि नः
त्वं पुत्रानिह पौत्रकांश्च सुखय श्रीरुद्र शम्भो प्रभो ॥ ९

Meaning of the Mantra-

Some people with their minds full of arrogance, ego and pride, propitiate other gods through sacrifices. Wishing to punish such men you bear a body burning with rage and a mind firm with cruel thoughts. Please don't bear such thoughts towards us at any time. O Rudra! May your weapons and cruel intentions avoid all of us, your devotees, and remain at a distance. Moreover, for our sake, keep away your strung bow. Having created the universe you entered into it and in order to perpetuate the creation in the whole world, you sprinkled the seed into the wombs of the female and hence you are our father. Therefore, O Rudra!, my Lord Śambho! give happiness to us, your sons and grandsons. 7,8,9.

ध्यानम् -

वंशोद्धारकशक्तिभक्तिसुगुणश्रीकीर्तिमत्पुत्रदं
ध्यायन्तं भगवन्तमन्तरनिशं स्वात्मानमेव स्वयम् ।
नानाप्रस्फुरदायुधं नतमहापापौघदुःखापहं
देवेशं गजचर्मसंवृततनुं श्रीकृत्तिवासं भजे ॥ १० ॥

1 तत्र - क

## Dhyana sloka -

I salute Krithivasas, (the wearer of the elephant hide) who meditates on his own self within himself, whose body is covered with elephant hide, who is the leader of the gods, who weilds many and varied bright weapons, who removes the sins and sorrows of those who salute him, and is the giver of sons possessing good reputation, wealth, virtues, devotion, and the power to raise the family to a higher status both materially and spiritually). 10

मीढुॅष्टम शिवॅतम शिवो नॅः सुमनाॅ भव ।

परमे वृक्ष आयुॅधं निधाय

कृत्तिं वसाॅन आचॅर पिनाॅकं बिभ्रदागॅहि ॥१० ॥

नाथो यः प्रकृतेः परश्च पुरुषः सर्वान्तरात्मा जपा -

लौहित्यं स्फटिकादिकेष्विव (तु) यः पुंभावसम्भावितः ।

पुंभावः पुरुषेषु भाति जगति स्वांशप्रधानेषु यः

स्त्रीष्वेव प्रकृतिप्रधानवपुषु (तनुषु) स्वं वीर्यमासिञ्चसि ॥ ११ ॥

Meaning of the word मीढुष्टम -

O Lord of Prakṛti[1] and the all pervading Supreme Soul! Your masculine nature is reflected in men who are predominently your own parts, just like the redness of the Japa flower is reflected in crystal. You sprinkle your masculine energy in women who are predominently the parts of Prakṛti. 11

1. According to the Samkhya system of philosphy, प्रकृति or matter is the source of the material world by its evolution in the presence of पुरुष - the soul or energy.

योऽत्यन्तं शिवदः समस्तजगतां स त्वं प्रसादार्थिना -
मस्माकं च शिवो भवाद्य सुमना हानिर्न ते तावता ।
धन्याः स्याम वयं च किञ्च परमे वृक्षे क्वचिद्दूरतो
निक्षिप्यायुधजालमेतदखिलं पापात्मनां भीषणम् ॥ १२ ॥
सौम्यं बाहुविभूषणं करतले बिभ्रत्पिनाकं धनुः
शान्तं[1] कान्तमुपेत्य तापसवपुः कृत्तिं वसानः शुभाम् ।
वैयाघ्रीं वनमध्यतः करुणयाभ्यागच्छ पाहि स्वकान्
रक्षन् नः पुरतश्चराचरहितं श्रीरुद्र शम्भो प्रभो ॥ १३ ॥

Meaning of the remaining Mantra-

You are the bestower of happiness to the whole universe. Please become auspicious (शिव) and be pleased with us who seek your favour. You will not lose anything by that but we will become blessed. Please also deposit your entire collection of weapons which cause terror to sinners, in some distant tree. O Rudra! the bestower of happiness and the lord of every one! Holding the unstrung bow Pinaka in your hand as an ornament, you come to us from the midst of the forest in a calm and dignified manner, assuming the form of an ascetic wearing the holy tiger-skin, and protect us, your devotees. You also maintain the welfare of the whole movable and immovable world. 12-13

ध्यानम् -

अर्थप्राणविपत्तिसंशयभयक्लेशारिचोरव्यथा -
भीतिघ्नं हृदि भावयन्तमनिशं शंभुं स्वरूपं स्वयम् ।
अभ्यायान्तमतीव सुन्दरतनुं सन्मङ्गलैकालयं
सानन्दं च पिनाकिनं वनचराकारं युवानं भजे ॥ १४ ॥

---

1 तान्तं शान्तं - क

## Dhyana sloka -

I worship Rudra in the form of a youthful forester, beautiful, joyous, the abode of all good and auspicious things, coming towards us from the forest wielding the bow Pinaka, the remover of dangers to wealth and life, the dispeller of doubts, fears, afflictions, enemies, theives and pains and one who contemplates on his own self within himself. 14

विकिॅरिद् विलोॅहित नमॅस्ते अस्तु
भगवः । यास्तेॅ सहस्रꣳ हेतयोऽ -
न्यमस्मन्निवॅपन्तु ताः ॥ ११ ॥

लौहित्येन विवर्धितं[1] गिरिजया यस्याङ्गमर्धं सदा
यं वेदं[2] (वेदान्त) गिरो वदन्ति च सदासङ्गो ह्ययं पूरुषः ।
कालुष्येण विवर्जितः शिव इति ख्यातश्च यः पूजितः
सद्भिः सद्विविधामयार्तिभयहृत्[3] संसारघोरापदाम् ॥ १५ ॥
यस्त्वं खण्डयितासि काण्डनिवहांश्चण्डान्प्रकीर्याभितो
दण्ड्यान् दण्डयसि स्वयं च हरसि स्वैर्भीषणैरायुधैः ।
ज्ञानैश्वर्य[4]यशःसुवीर्यकरुणावैराग्यभाग्यामित -
श्रीभिः पूर्णधृतायुधस्तु भगवन् तस्मै नमस्तेऽधुना ॥ १६ ॥

---

1. As a result of Parvati in blue colour occupying the other half, the haif portion of the Lord appears more red in contrast. For other meanings of विलोहित see Mantra 1 of this अनुवाक under नीललोहित ।
2. In the place of वेद, वेदान्त is suggested to avoid वृत्तभङ्ग and the suggested reading suits the context well. (Editor)
3. किरतिर्हिंसाकर्मा । किरि हिंसां ददतीति किरिदान्यायुधानि, तद्रहितो विकिरिदः । विकीर्येषून् हन्तव्यान् हन्तीति विकिरिदेति केचित् । यद्वा विविधं हिंसन्ति प्राणिन इति विकिरयः पापव्याधयः संसारभयस्तेषां दाता खण्डयिता विकिरिदः । दो अवखण्डने । भ - भा
4. भगवच्छब्दस्य षड्गुणवाचित्वं स्मर्यते - "उत्पत्तिं च विनाशं च —" etc. and "ऐश्वर्यस्य समग्रस्य" etc. - भ-भा ।

Meaning of the first half of the Mantra-

O Supreme lord fully possessed of knowledge, overlordship, fame, valour, compassion, detachment, good fortune and abundant wealth! We offer our salutations to you, a half of whose body is rendered more red by the daughter of the mountain, whom the Upanishads say as the Supreme Being, who are non-attached and (or) free from impurity and are famous as the most auspicious God worshipped by the wise; who is the remover of the various diseases, afflictions and fears of the good and the destroyer of the great danger of Samsara, and who, with weapons in hand scatter the multitudes of fierce sinners on all sides who deserve punishment and kill them with your terrible weapons. 15-16

यास्ते सन्ति सहस्रमाशुगतयस्ता हेतयः प्राणिनां
[1]शास्तःकांश्चिदधिक्षिपन्नघवतां मध्येऽस्मदन्यांस्तथा ।
भक्ता एव वयं भवेम भवतः सर्वात्मनाऽ[2]नागसः
पाह्यस्मानिदमेव ते सुमनसो नित्यं समाशास्महे ॥ १७ ॥

Meaning of the second half of the Mantra-

O Ruler of all creatures! May your thousands of fast-moving weapons strike those among sinners who are other than us. We will become your devotees in such a manner that we may not do any sinful act, and with a good heart, we only pray that you always protect us. 17

ध्यानम् -

तिर्यग्जन्तुमहाजलूकजनतावश्यादिसिद्धिप्रदं
देवं सर्वजयप्रदं च भजतां शम्भुं पुलस्त्यार्चितम् ।
सस्कन्दं जगदम्बया युततनुं देवादिरुद्रैःस्तुतं
साम्बं क्लृप्तविवाहमङ्गलविधिं स्मेराननं भावये ॥ १८ ॥

---

1 शस्त - क 2 सर्वात्मना सागसः -क

**Dhyana sloka -**

I contemplate Lord Śambhu bearing a smiling face, wearing the auspicious marriage dress and ornaments, his body united with that of the universal Mother and associated with Skanda, who is extoled by the Gods and Rudras and worshipped by Pulastya. The Lord contemplated upon in this form is the giver of all-round victory and yogic powers such as the capacity to attract and control small creatures, big leaches and crowds of human beings. 18

सहस्रॉणि सहस्रधा बॉहुवोस्तवॅ हेतयॅः ।
तासामीशॉनो भगवः पराचीना मुखॉ कृधि ॥ १२ ॥

प्रत्येकं च सहस्रधा बहुसहस्राणां सहस्राणि याः
सन्त्येवोत्तमहेतयस्तव शिवासंख्येयबाहुष्विह ।
तत्संक्षेपणतत्समुद्भवमहाहिंसाविधानादिके -
ष्वीशानो भगवन् सृजस्यवसि तच्चित्रं किमत्र प्रभो ॥ १९ ॥
पुण्यापुण्यकृतः परस्परमसंभिन्ना न लक्ष्यं क्षणा -
ल्लक्षीकृत्य तु पूर्णपापवशतस्तन्निग्रहानुग्रहे ।
हर्तुं भर्तुमशेषलोकमपि यस्त्वं भाविकामीशतां
धत्सेऽन्तः करुणावशाच्छरणगान् त्रातुं सदास्मान् प्रति ।
हेतीनां च मुखानि चानभिमुखान्यस्माकमस्मद् द्विषां
नित्यं चाभिमुखानि देव कुरु नः सौख्यप्रदानि प्रभो ॥ २० ॥

O Śiva! In your countless hands there are thousands of a variety of excellent weapons. You have absolute mastery over the use of these weapons in causing death and destruction with them and in withdrawing them. Hence there is no wonder that you create and maintain them. Men who have done good deeds and those who are sinners cannot be equally targets of those weapons. You maintain mastery over

them only to aim them at sinners in order to punish and bless them and also to protect the entire world. Therefore, to save us who have surrendered to you seeking protection, O Lord! be merciful and turn the points of those weapons away from us and direct them against our enemies. 19-20

## ध्यानम् -

देवोपद्रवराजपीडनमहाकान्तारचोरव्यथा -
भीतिघ्नं हृदि नारदेन मुनिना ध्यातं सतां[1] सर्वदम् ।
रुद्रं सर्वमनोज्ञभूषणधरं सर्वायुधालङ्कृतं
सर्वाघौघहरं च सर्वजगतामीशं महेशं भजे ॥ २१ ॥

## Dhyana sloka -

I worship the supreme Lord of the universe, Sri Rudra adorned with weapons and wearing all kinds of beautiful ornaments. The Lord worshipped by Narada in this form is the destroyer of fear from troubles arising from gods, from the harassment of kings, from the affliction caused by thieves in dense forests, and also the remover of all the accumulated (collection of) sins and the giver of everything to the good.

END OF ANUVAKA-10

## अथैकादशोऽनुवाकः

अवतारिका -

कल्पादौ[2] विधिनार्थितेन कृपया रुद्रेण ये निर्मिताः
तत्तुल्या[3]कृतयस्तदीयकृतयस्तद्धेतयस्तद्धियः ।

---

2.अत्राहुः - ब्रह्मणा प्रार्थितेन देवेन सृष्टा देवतुल्या रुद्राः सर्वेषां स्थावरजङ्गमानां रक्षणपोषणोपसंहारादि कुर्वाणाः कर्मानुरूपं फलं प्रापयन्तः सर्वत्र ब्रह्माण्डे नानारूपाः वायुभूता रश्मिमनुष्यादिरूपाश्चाधिवसन्ति, त इदानीं प्रसाद्यन्ते । अन्ये आहुः - देवोऽयमनुग्राह्यवशेन शतधा, सहस्रधा, शतसहस्रधात्मानं विभज्य प्रत्येकं दर्शनाभिमतप्रदानादिकं करोति । ते च तथा विभक्ता अनादौ संसारे असंख्याताः अनुग्रहाय जगतः प्रवर्तन्ते, तानधिकृत्यैते मन्त्रा प्रवर्तन्त इति । अन्ये आहुः - संहर्तुर्देवस्य क्रोधात्मविस्फुलिङ्गाः प्राणिनोऽभिगम्यमानाः सर्वेषु लोकेषु चरन्ति, तेषामियं प्रसादना इति । रुद्रसदृशा गणेश्वरा रुद्रा इत्यन्ये - भ-भा । 3. अनन्तस्य - क। 1 सदा - क

लोकानुग्रहनिग्रहैकनिरताः[1]कर्मानुरूपं फलं
यच्छन्तो निवसन्ति ये च परितः सूर्यानिलाद्यंशकाः ॥ २२ ॥
विश्वे देवगणाः प्रसिद्धसुगुणास्तेजोमरुत्पार्थिवा -
कारा ये च मेहश्वरस्य बहुधा नित्यं विभक्ताकृतेः ।
भक्तानुग्रहतत्परस्य बहवः सानुग्रहा विग्रहाः
ये भक्ताः शिवभावनागधिगता रुद्रा सरूपा हि ते ॥ २३
वैयाघ्राजिनभोगिभूषणभृतो बालेन्दुगङ्गाजटा -
जूटालङ्कृतमस्तकास्त्रिणयनाः साम्बाः सनन्दीश्वराः ।
ये देवानुचराश्च देवसदृशाः शम्भोर्गणाधीश्वराः
सर्वेऽमी भजतां शिवात्मकतया संसाररुग्द्रावकाः ॥ २४

ANUVAKA-11

Introduction to the first Mantra-

Requested by the creator at the beginning of kalpa (when creation started after deluge), Rudra created thousands of beings (Rudras) who were similar to him in their appearance, deeds, weapons and intelligence and who protected and punished the creatures by giving them appropriate fruits to their actions. There are again the Deva Ganas who are partial incarnations of the Sun, Vayu and Agni, who are well-known for their virtues and who remain in the form of rays, winds and earth, (Tejas, Vayu and Pṛthivi) Further, they are the direct incarnations in various blessed forms of the Supreme Lord who is eager to favour his devotees. There are also the devotees who have attaind forms similar to that of Śiva (सारूप्यं) by contemplating upon Him, who wear the tiger-skin and ornaments of snakes, whose heads are adorned with the crescent moon, the Ganga and the matted hairs, who possess three eyes and are accompanied by Amba and Nandikesvara. There are again the followers of Rudra similar to him and

1. निपुणाः - ख

also the leaders of the Ganas. All these being the manifestations of Śiva, are capable of driving away the disease of Samsara and hence are called Rudras. 22. 23. 24

सहस्रॉणि[1] सहस्रशो ये रुद्रा अधि[2] भूम्याम् ।
तेषाᳬसहस्रयोजनेऽवधन्वॉनि तन्मसि ॥ १
अस्मिन्मॅहत्यॅर्णवेॅऽन्तरिॅक्षे भवा अधिॅ ।
(तेषां सहस्रयोजनेऽवधन्वानि तन्मसि) २
नीलॅग्रीवाः शितिकण्ठाः शर्वा अधः क्षॅमाचराः ।
(तेषां सहस्रयोजने --- तन्मसि ॥) ३
नीलॅग्रीवाः शितिकण्ठा दिवᳬरुद्रा उपॅश्रिताः ।
(तेषां सहस्रयोजने ---- तन्मसि ॥) ४

प्रत्येकं तु सहस्रशो बहुसहस्राणां सहस्राणि ये
रुद्राश्चाधिवसन्त्यधीश्वरतया भुव्यन्तरिक्षे दिवि ।
ये सर्वत्र भवा भवेन सदृशा अस्मिन् महत्यर्णवे[3]
वृष्ट्यर्णैः[4]परिपूर्णमेघनिवहैः पूर्णेऽन्तरिक्षेऽपि च ॥ २५ ॥

---

1. सहस्राणि सहस्रश इत्यानुष्टुभोऽनुवाकः अवतानसंज्ञकः दशर्चः । तेषां सहस्रयोजन इति सर्वत्रानुषज्यते । जपादावाद्यन्तयोस्त्वाम्नायते । नमो रुद्रेभ्य इत्यादीनि त्रिणि यजूंषि - भ-भा This is an Anuvaka of ten ṛks with three Yajus (prose lines) in the end. While explaining the meaning, the second half of the first ṛk "तेषांसहस्रयोजने etc. should be taken as the second half of ṛks 2 to 9 where it is not expressly given. These ten ṛks are grouped as 4+3+2+1 for Dhyana Slokas (Editor).
2. रुद्रा अधिभूम्या - भूमेरुपरि वर्तन्ते । अधिरुपरिभागे । यद्वा अधिरैश्वर्ये । अधिभूम्यां भूमेरीश्वरा इत्यर्थः । भ - भा
3. अस्मिन् महति अर्णवे, अर्णसा वृष्ट्युदकेन तद्वति अन्तरिक्षे । अथवा अर्णवे समुद्रे अन्तरिक्षे च ये भवा इत्येके । द्यावापृथिव्योरन्तरा क्षियति निवसतीत्यन्तरिक्षम्, पृषोदरादि । भ - भा
4. वृष्टिं नः - क

ये हालाहलनीलकण्ठवपुषः शर्वाः क्षमायामधः
पाताले प्रचरन्ति येऽपि च दिवं रुद्राः सदोपाश्रिताः ।
तानेवं स्तुतिभिः सदैव नतिभिश्चाराधयन्तो वयं
तेषामद्य सहस्रयोजनमिते देशे[1] स्थितानामपि ॥ २६
अर्वाक् तत्परतःपुरश्च परितः सज्यानि धन्वान्यलं
विज्यानातनुमः सुखाय सततं क्षेमाय योगाय च ॥ २७

These Rudras in each group are counted in thousands and many thousands. There are also Rudras who are the presiding deities of various objects on earth, in the sky and in heaven. There are again Rudras in the vast ocean and in the sky overcast with clouds full of rain water, who are similar to Śiva and who manifest everywhere. There are also Rudras with their necks blue owing to the presence of Kalakuta poison, moving about in the underworld and still other Rudras who reside in heaven. We worship all these Rudras with praises and prostrations, and, for the sake of our continuous happiness and welfare, we unstring their bows who reside around us within a distance of thousand Yojanas or even beyond that. 25, 26, 27.

. ध्यानम् –

राज्ञां शत्रुविनाशनं प्रणमतां घोराभिचारक्रिया –
सम्भूताघनिवारणं च मुनिना दुर्वाससाराधितम् ।
बिभ्राणं त्रिशिखं प्रदीप्तवपुषं रुद्रं ज्वलन्मूर्धजं
भोगीन्द्राभरणं भजे भयहरं दंष्ट्राकरालाननम् ॥ २८ ॥

---

1. यत्राहमस्मि तत्र समन्तात्सहस्रयोजनादर्वाक् वर्तमानानां तेषां धनूंष्यवतन्मः, ततः परस्तादधिज्यधन्वान एव तिष्ठन्त्विति । अथवा योजनानां सहस्रमतीत्य वर्तमानानामपि तेषां धनूंष्यवतन्मः, किं पुनस्ततोऽर्वाग्वर्तमानानाम् – भ – भा

## Dhyana sloka -

I worship Rudra, the remover of fear, who holds a trident, his body and hairs shining brightly like fire, his ornaments being the snakes and his face fierce with protruding teeth. The Lord worshipped in this form by sage Durvasas is the destroyer of the enemies of kings and the remover of calamities caused by the practice of terrible sorcery, of those who salute him. 28

(श्रीस्कन्द उवाच - ?)

अकर्तुं कर्तुं वा भुवनमखिलं ये किल भव -
न्यलं ते पादान्ते पुरहर वलन्ते सुरवराः ।
कुटीरं कोटीरं त्वमहह कुलीराय कृतवान्
तथा विश्वस्येष्टे तव पुनरधीष्टे हि करुणा ॥
श्रीकान्ताद्यास्त्रिदशतिलकाःश्रीमतीमर्थयन्ते
यां ते दृष्टिं स्पृहयति जनस्येव तस्यै किलास्यै ।
अव्यावृत्ता गतिरियमये नाथ तेषाममीषा -
मप्यन्तस्ते समुचितमुमाकान्त मन्तुं नमन्तुम् ॥

इति शिवरहस्ये द्वादशांशे द्वात्रिंशोऽध्यायः

END OF CHAPTER-32 in Śivarahasya.

अथ त्रयस्त्रिंशोऽध्यायः

ये वृ॒क्षेषु॑ स॒स्पिञ्ज॑रा॒ नील॑ग्रीवा॒ विलो॑हिताः ॥
(तेषां सहस्रयोजने --- तन्मसि ॥) ५

ये भूतानामधिपतयो विशिखासः कपर्दिनः ॥
(तेषां सहस्रयोजने ---तन्मसि ॥) ६
ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ॥
(तेषां सहस्रयोजने --- तन्मसि) ७

श्रीस्कन्द उवाच -

ये वृक्षेष्विह कालकर्म[1]वशतो वावृश्च्य[2]मानेष्विमां
क्ष्मामावृत्य चराचरात्मकतया तिष्ठन्ति जीवेषु ये ।
अन्तर्व्याप्य जगन्ति येऽखिलजगत्पीडाकराणां[3] सदा
हन्तारः[4] सितकन्धरा[5] बहुविधा ये नित्यनिष्कल्मषाः[6] ॥ १ ॥
भूतानां पृथिवीजलाग्निमरुदाकाशात्मनां येऽधिपाः
स्थित्वा तेषु जगन्ति पान्ति परितस्तत्कार्यभूतैः फलैः ।
नानाभूतगणाधिपाश्च विविधज्वालाज्वलन्मूर्तयो
ये वा वीतशिखा[7] विचित्रविशिखा ये वा कपर्दोज्वलाः ॥ २ ॥
ये वाऽन्नेषु चतुर्विधे[8]षु च तथा पेयेषु वान्नादन -
व्यापारार्हविचित्ररूपचषकामत्रादिके संस्थिताः ।

---

1. कालकर्म - क ।
2. वृक्षेषु स्थावरजङ्गमात्मसु जीवेषु, वृक्षेष्वेव वा ये रुद्राः । सस्पिञ्जराः शष्पपिञ्जराः, शष्पं बालतृणम् । भ - भा
3. लोकपीडकानां जरयितारो नीलग्रीवाः नीलकण्ठाः ।
4. हर्तारः - क ।
5. ग्रीवायामेकस्मिन् प्रदेशे नीलवर्णाः नीलग्रीवाः, प्रदेशान्तरे शितिकण्ठाः श्वेतवर्णाः (सयणः)
6. विलोहिताः - विविधलोहिताः विगतकालुष्या वा भ - भा ।
7. विशिखासः शिखारहिताः, विविधशिखा वा विविधस्पयो वा । भ - भा
8. The four kinds of food are - (1) भक्ष्य - The food one has to bite and chew well before swallowing like bread and such solid things. (continued)

पापिष्ठान् फलतोऽर्थतश्च विविधं पापानुरूपं जनान्
न्यूनाधिक्यविचित्रधातुगतिभिर्विध्यन्ति च व्याधिभिः ॥
तेषामद्य सहस्रयोजनमिते दूरे स्थितानां वयं
विज्यान्यातनुमो धनूंषि सततं क्षेमाय योगाय च ॥ ३

CHAPTER- 33 in Śivarahasya.

There are Rudras who pervade the moving and stationary living beings and (or) reside in trees which cover the earth and are cut (destroyed) at the proper time according to their previous actions.There are others who possess white necks and are free from faults, who assume various forms and destroy all those who cause trouble to the whole world. Again there are Rudras who are the masters of the five elements-the earth, water, fire, air and sky (space). Remaining in them they protect the people through the fruits of their own actions, or, there are the various Bhuta Ganas with different forms bright like flames, some without hairs (bald or shaven heads), some with varied tufts and others shining with matted hairs, (who protect the people according to their Karma). Again there are Rudras who, dwelling in the four kinds of food or in drinks, or in the various kinds of vessels that are used for eating and drinking, strike the sinners in many ways in proportion to their sins by means of mild or serious diseases caused by the agitation of the elements (धातु) in the body (such as वात, पित्त and कफ.)

---

(1) भोज्यम् - food that can be swallowed with little effort like Payasam.

(2) लेह्यम् - Semi-liquid stuff that slowly dissolves itself when put into the mouth and goes down.

(3) चोष्यम् - Things like sugarcane which should be crushed by the teeth and after swallowing the essence, the rest is thrown out.

We worship all these Rudras and unstring the bows of those who remain within a distance of one thousand Yojanas from us (or even beyond) for our continuous welfare and happiness. 1.2.3

ध्यानम् -

राज्ञां शत्रुनृपारिमारणमहासिद्धिप्रदं तादृशां
भक्तानामखिलाघसंघहरणं श्रीदेवलाराधितम् ।
रुद्रं भीषणभोगिभूषणधरं दंष्ट्राकरालाननं
बिभ्राणं त्रिशिखं प्रदीप्तवपुषं ध्यायेज्ज्वलन्मूर्धजम् ॥ ४ ॥

**Dhyana sloka -**

One should meditate upon Rudra wearing ornaments of dreadful serpents and holding a trident, his face terrible with protruding teeth and his body and hairs blazing like fire. The Lord worshipped by sage Devala in this form is the remover of all sins of the devotees and the giver of great power to the kings that is capable of destroying the enemy kings and other adversaries. 4

ये प॒थां प॑थि॒रक्ष॑य ऐलबृ॒दा य॒व्युध॑ः ॥
(तेषां सहस्रयोजने ---- तन्मसि)
ये ती॒र्थानि॑ प्र॒चर॑न्ति सृ॒काव॑न्तो निष॒ङ्गिण॑ः ।
(तेषां सहस्रयोजने --- तन्मसि) ॥ ९ ॥

येऽमी लौकिकवैदिकादिविधयो[1] नानाविधानां पथां
सर्वेषामपि रक्षकास्तनुविधः कर्मानुरूपेण ये ।
कर्तृत्वादिमतिप्रसक्तविविधव्यापारशून्यस्थिर -
ध्यानापास्तसमस्तकल्मषमनःसाक्षात्कृतब्रह्मणाम् ॥ ५
ईशन्यस्तसमस्तदुर्भरमहासंसारभारात्मना -
मन्नं[2] दातुमचञ्चलं करुणया हस्ते दधानाः सदा ॥
ये युद्ध्वा युवभिः[3] खलैरतिबलैः संपीड्यमानान् सुरान्
संरक्षन्ति हरन्ति कर्मवशतश्चायुः परेषामपि ॥ ६
ये तीर्थानि चरन्ति तीर्थफलदास्तीर्थद्विषः सन्ततं
हन्तुं बाणकृपाणकार्मुकसृकावन्तो निषङ्गोद्यताः ।
तेषामद्य सहस्रयोजनमिते दूरे स्थितानां वयं
विज्यान्यातनुमो धनूंषि सततं क्षेमाय योगाय च ॥ ७ ॥

There are Rudras who are the guardians of all the manifold secular and religious codes of conduct laid down in the Vedas and law books who strike the bodies according to their previous actions; who, out of compassion, hold food in their hands for giving to those who have washed off their sins by

---

1. उभये पन्थानः लौकिका वैदिकाश्च । तेषां पथां रक्षितारो ये रुद्राः तेषामीशितारः तान्निरोद्धुं तैश्च प्राणिनः प्रस्थापयितुं समर्थाः । पथां सर्वेषां संबन्धिनः पथिरक्षय इति समस्तव्यस्ताभ्यां प्रतिपाद्यते । यथा "वसूयवो वसुपते वसूनां । गवामसि गोपतिरेक इन्द्र" इत्यादि - भ - भा
2 इरा अन्नं, रलयोरेकत्वं स्मर्यते । इलां बिभ्रति सन्मार्गवर्तिभ्यो दातुमिति इलाभृतः, ततो ह्रस्वे अणि वर्णव्यत्यये च कृते ऐलबृदाः । अपरे - इराणां समूह ऐरं, तस्य भर्तारः ऐलबृदा इति । शेषं समानम् । भ - भा
3 यव्युधः - यौतेर्विचि यो इति युवशब्दपर्यायः । युवभिरेव युद्धयन्तीति यव्युधः । केचिदाहुः - यूयन्ते मिश्र्यन्ते शरीरेन्द्रियप्राणा अनेनेति यवशब्देनायुरुच्यते । तस्य संप्रहर्तारो यव्युधः । एतदुक्तं भवति । लौकिकवैदिकमार्गेषु वर्तमानानां कर्मानुगुणं केभ्यश्चिदन्नमायुश्च ददति । केभ्यश्चिदुभयमपहरन्ति, केभ्यश्चिदन्नं दत्वायुरपहरन्ति, केभ्यश्चिदायुर्दत्वान्नमपहरन्ति । अपरे तु ब्रुवते - यद्विध्यन्तीति यव्युधः, यद्विध्यं तदेव विध्यन्तीति न कदाचिदतिक्रमकारिणः । भ - भा

steady meditation in which all functions prompted by the feeling that they are the doers are absent, and have realised the Supreme Lord within their heart and consequently have placed their unbearable burden of Samsara in the hands of the Lord. There are also Rüdras who save the gods by fighting against the young and strong wicked persons who harass them, and other Rudras who reside in sacred places giving the benefits of actions done there and guarding those places wielding arrows, bows, swords and other weapons to punish those who spoil the sacred places (Tirthas).

We worship all those Rudras and unstring the bows of those Rudras who remain within a distance of one thousand miles (and even beyond) for our continuous welfare and happiness. 5-6-7

ध्यानम् -

विद्वद्वल्लभवर्यवंशकरसत्पुत्रप्रदं ध्यायतां
सौम्यत्वेन समस्ततीर्थफलदं श्रीदेवलाराधितम् ।
रुद्रं भीषणभोगिभूषणधरं दंष्ट्राकरालाननं
बिभ्राणं त्रिशिखं प्रदीप्तवपुषं ध्यायेज्ज्वलन्मूर्धजम् ॥ ८ ॥

## Dhyana sloka -

One should meditate upon Rudra wearing ornaments of dreadful serpents and holding a trident, his face terrible with protruding teeth and his body and hairs blazing like fire. The lord worshipped by Devala in this form is the giver of good learned sons who would perpetuate the family, and the bestower of fruits of all sacred Tirthas to those who contemplate on him. 8

य ए॒तावॅ॑न्तश्च भूया॒ᳪसश्च दिशो॑ रु॒द्रा वि॑तस्थि॒रे ।
तेषा॒ᳪसहस्रयोज॒नेऽव॒धन्वा॑नि तन्मसि ॥ १० ॥

एतावद्भिरिहोदितैर्दशमहामन्त्रैः प्रकाशीकृता -
श्चैतावद्भिरियत्तया परिमिता भूम्यन्तरिक्षादिभिः ।
ये त्रैलोक्यमतीत्य सर्वभुवनं व्याप्ताश्च सर्वात्मकाः
भूयांसश्च वसन्ति ये दशदिशो रुद्राः समाक्रम्य च ॥ ९ ॥
तेषामेव सहस्रयोजनमिते दूरे स्थितानां वयं
विज्यान्यातनुमो धनूंषि सततं क्षेमाय योगाय च ॥ १० ॥

The Rudras described in the above ten Mantras and counted as many thousands residing on the earth, in the sky and in heaven; those who have gone beyond the three worlds and have spread all over the universe in the form of every object in existence, and also those who have occupied the ten quarters; we worship all these Rudras and unstring the bows of those who remain within a distance of one thousand Yojanas from us and even beyond for our continued welfare and happiness. 9-10

ध्यानम् -

विद्यापुत्रवराङ्गनाप्तिसुमहामातङ्गतुङ्गाश्वदं
दिव्यस्यन्दनदिव्यसस्यसुमहीभोगादिहेमार्थदम् ।
रुद्रं भस्मविभूषणं फणिफणाभूषोज्ज्वलत्कन्धरं
चन्द्रोद्भासिशिखं प्रदीप्तवपुषं ध्यायेत्रिशूलीकरम् ॥ ११ ॥

## Dhyana sloka -

One should contemplate on Rudra adorned with sacred ashes and holding the trident in his hand, his neck shining with the gems on the hoods of the serpent-ornaments, his head adorned with the (crescent) moon and his body having a blazing lustre. The Lord worshipped in this form is he bestower of learning, sons, good women, huge elephants, tall horses, divine chariots, good lands with bountiful vegetation and wealth in the form of gold. 11

नमो[1] रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे
ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो
दश प्राचीर्दश दक्षिणा दश प्रती-
चीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते
नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि
तं वो जम्भे दधामि ॥ ११

---

1. This prose passage is a combination of three separate Mantras in prose (Yajus) which should be read as follows for Homa and other purposes -
   1. नमो रुद्रेभ्यो ये पृथिव्यां, योषामन्नमिषवस्तेभ्यो दश —— तं वो जम्भे दधामि ।
   2. नमोरुद्रेभ्यो येऽन्तरिक्षे, येषां वात इषवस्तेभ्यो दश —— तं वो जम्भे दधामि ।
   3. नमो रुद्रेभ्यो ये दिवि, येषां वर्षमिषवस्तेभ्यो दश —— तं वो जम्भे दधामि ।

श्रीरुद्रेभ्य इदं नमः[1] प्रथमतो वाचैव[2] वाग्भूतये
कर्मण्यप्यथ[3] ये वसन्ति च पृथग्भूम्यन्तरिक्षादिषु ।
दत्वान्नं बहुदक्षिणादि[4] पुरतस्त्वां क्रौर्यशौर्यादिभिः
पापिष्ठान् गदबन्धनादिजनितक्लेशाकुलान्[5] कुर्वताम् ।। १२ ।।

अल्पाल्पैरधिकाधिकैर्मुहुरकालोत्थैर्मरुद्वर्षणै -
र्येषां पीडयतां जगन्त्यधिकृतामन्नं च वातस्तथा ।
वर्षं तेषु समूहवत् त्रितयमप्येतज्जगज्जीवनं
हिंसासाधनमास दुष्कृतकृतां, क्षेमाय नित्यं सताम् ।। १३

तेभ्यो वः पुरतो वयं त्विह दश प्राचीः प्रतीचीर्दशा -
वाचीर्वीर्य (श्चाथ) दशाञ्जलैरथ दशोदीचीर्दशोर्ध्वाञ्जलैः ।
आरोग्याय शिवाय कायिकनमस्कारात्मकाः सर्वतः[6]
कृत्वा चिन्तितसिद्धयेऽथ मनसा तेभ्यो नमः कुर्महे ।। १४ ।।

ते रुद्राः सुखयन्तु नः प्रणमतस्तेमे भजन्तो वयं
निष्पापाः स्तुतिपूर्वकैर्नतिशतैर्युष्मत्कृपाभाजनाः ।
तस्मादस्मदरिं तु पापपुरुषं हन्तुं सयत्नाश्चिराद्
यं द्विष्मः परिपीडयन्ननुदिनं दारिद्र्यरोगादिभिः ।। १५ ।।

---

1. अनेन मन्त्रेण पृथिव्यादिलोकत्रयवर्तिनो रुद्रान्नमस्कृत्य तेभ्य आत्मनः सुखमात्मद्वेषिणां च विनिपातं प्रार्थयते । ये पृथिव्यां येषामन्नमिषव इति प्रथमस्य विशेषः । येऽन्तरिक्षे येषां वात इषव इति द्वितीयस्य । ये दिवि येषां वर्षमिषव इति तृतीयस्य । --- अन्नमिषवो - अन्नमेवेषुस्थानीयं हिंसासाधनमिति यावत् । तत्र काश्चिदन्नं भक्षयन्तोऽपथ्याशनादिना व्याधीनुत्पादयन्तो विध्यन्ति । काश्चिदनशनं कृत्वा बुभुक्षया विध्यन्ति । काश्चिद्धननार्थं स्तेयादि कारयित्वा वधादिकं प्रापयन्ति । एवं दुष्कर्मसु येषां हिंसासाधनमन्नं तेभ्यो नमोऽस्त्विति । अथ नमस्कारो विशेष्यते - दश प्राचीः - प्राच्योऽङ्गुलयो दश प्राङ्मुखाञ्जलिरूपा दश । एवं दश दक्षिणा दक्षिणामुखाञ्जलिरूपा इत्यादि - भ-भा
2. अन्ये आहुः - आदौ नमो रुद्रेभ्य इति वाचिको नमस्कारः कृतः । तेभ्यो दश प्राचीरित्यादिकस्तु मध्ये कायिकः । ततस्तेभ्यो नम इत्यन्ते मानसः । एवं कृत्वा ते नो मृडयन्त्वित्यादिना स्वाभिमतं प्रार्थ्यते इति । भ - भ 3. कर्मण्यप्रथमे (?) क। 4. बहुभक्षणादिषु रताः - ख
5. वधबन्धनादि - क 6. कुर्वतः - क

योऽस्मान् द्वेष्टि तमेव दन्तनिवहे[1] कालात्मनां वो दधा-
म्यत्यन्तं सुखितान् हितान् कुरुत नः पूर्वान् सदा रक्षत ॥ १५ ॥

At first our verbal salutations for the improvement of our speech to Rudras residing on earth, in the sky and in heaven, who, by giving plenty of food accompanied by gifts make the great sinners who have committed cruel and violent deeds suffer from many diseases, imprisonment and other afflictions, and who for the welfare of the good people cause trouble to the sinners through insufficient or excessive and untimely rains and winds and thus make food, air and rain which are the three essential things for life in this world, the weapons of punishment of the wicked. To those Rudras we[2] next offer our bodily prostrations with folded hands, ten salutations to those in each of the following five directions- the east, west, south, north and above, for our good health and happiness. Then lastly we offer our mental salutations to all those Rudras for obtaining all that we wish for.

May these Rudras give happiness to us who salute them. O Lord! by worshipping you (in the above described forms) with hundreds of praises and prostrations, we have become worthy of your sympathy. Therefore you prepare yourself to strike our enemies who are sinners, with poverty, diseases and such other woes. We consign those whom we hate and those who hate us into the jaws (teeth), O Rudras! of your all-consuming form of Time (काल). May you protect our ancestors and make them happy and favourably disposed towards us. 12-13-14-15.

---

1. जम्भे - दन्ते, जातावेकवचनम् । जम्भेषु स्थापयामि, भक्षयत इत्यभिप्रायः- भ - भा
2. When the two palms are folded in Anjali bandha, the ten fingers point to one direction and they are treated as ten prostrations to that direction, according to भट्टभास्कर quoted in foot note. (Editor).

## ध्यानम् -

कालज्ञानदमन्नदं प्रणमतां जातिस्मरत्वप्रदं
सर्वाभीष्टदमात्मनात्मनि निजात्मानं भजन्तं सदा ।
रुद्रं देवमनन्तरुद्रवपुषं विश्वेश्वरं विश्वत -
श्चक्षुश्रोत्रकराङ्घ्रिमूर्जितमहाकालात्मकं चिन्तये ॥ १६ ॥

इत्येकादशोऽनुवाकः

श्रीस्कन्ददेवकृतं श्रीरुद्रभाष्यं समाप्तम्

## Dhyana sloka -

I contemplate on Rudra, the master of the whole universe in the form of Mahakala with eyes, ears, hands and feet in all directions, who has assumed the forms of countless Rudras and who meditates on himself, by himself within his own heart; who is the giver of knowledge of Time (past, present and future), the giver of food and the power to remember the previous birth (जातिस्मरत्वं) to those who offer prostrations to him, and who is also the bestower of all their desires. 16

END OF ANUVAKA 11

End of Skandadeva's Sri Rudra bhasyam.

## श्रीस्कन्द उवाच -

कस्त्वां व्यस्तसमस्तरूपमिह संस्तोतुं समस्तात्मकं ।
सामस्त्येऽपि समस्ततां न भजते ह्यन्यस्य का वा कथा ।
जल्पन्तं किमपि स्तनन्धयमिव प्रीत्या पिता तावकं
भक्तं मामव मे त्वमेव हि पिता माता च दाता तथा ॥

अमोमोदीदीशः कृतसुकृतवाराशिरभसा
कृतस्तुत्या नत्याप्यकृत तव नमोन्तैः (?) पदवरैः ।
तया देव्या दिव्यं पदयुगलमालोकनधियं
सुतं स्कन्दं नन्दन्नकथयदहो नष्टतमसम् ॥

## ईश्वर उवाच -

त्वं रुद्रार्थवचोभिरुग्रतपसा रुद्रार्थपारीणवान्
ओंकारप्रणवप्रवीणमननो ज्ञाता स्वयं पावनः ।
नेदृक्संस्तवमर्थवद् हृदि सदा रुद्रार्थदृक्कोऽपि वा
ध्यानेनाधिगतं मयैव कृपया ते तु प्रसूः पार्वती ॥
यस्याः स्तन्यरसामृतं प्रपिबतो विज्ञानवारांनिधेः
भक्त्याख्यानिललोलचञ्चलशिवज्ञानोर्मयो जृम्भिताः ।
तेषां शीकरसारसारसुमनःसौरभ्यभावं गणाः
देवा भूसुरसत्तमाश्च नियतं प्राप्ताः शिवज्ञानजम् ॥
धन्यस्त्वं जगदेकपावनकरीं विश्राणयन् मत्कथां
जैगीषव्यमुखेषु शाम्भवमुनिष्वेवं प्रसन्नात्मना ।
संसारामयभेषजं मम महारुद्रस्तवं केवलं
मत्प्रीत्यै भवता समीरितमिदं भूयात्तव श्रेयसे ॥
एवं ध्यानजपानुबोधनपदव्याख्यानवित्पावनः
पूजासंयमनप्रवीणमननो यो वा भवेदात्मनः ।
कामानाशु लभेत भूतिविलसद्गात्रस्त्रिपुण्ड्रोल्लसद्
रुद्राक्षामलहारकण्ठवलयो भूयात् त्रिणेत्रप्रियः ॥
निष्कामो यदि रुद्रजाप्यपरमो भुक्तिं लभेतसक्तधीः
ध्यानाकारविशेषमन्त्रपदवित्काम्यं सहस्रोत्तरम् ॥

जप्त्वा होमदशांशतर्पणविधिं कृत्वा च शैवार्चनं
भूत्वा कृच्छ्रपराकपावितततनुस्तां तां लभेत्कामनाम् ॥
जप्यः पश्चिमलिङ्गवक्त्रमभितो ध्यायन्नुदग्वक्त्रवान्
बालेन्दुद्युतिकोटिसन्निभमुमाकान्तं सदा शान्तधीः ।
पापौघप्रशमाय भस्मवरधृङ्मुक्तो विमुक्तिं गतः
तत्रैवामरणं वसन्नपि नरो भुक्तिं लभेत्पावनीम् ॥

यस्त्वेकवारं शतरुद्रजापी
पापैर्महद्भिः प्रविमुक्त एव ।
द्विवारमप्येतदिहात्र संपठन्
गणोत्तमः संभविता चिराय ॥
त्रिवाररुद्रं (रुद्रं त्रिवारं) प्रजपन्नघघ्नं
मय्येव लीनः स भवेद्धि पूरुषः ।
भक्तो विमुक्तिं समवाप्य मोदते
सोऽन्ते भवेद्राजतगोत्रवासी ॥
नक्तं दिवा वा प्रजपन्नभक्तो
मुक्तः स शक्तः स विमुक्तपापः ॥
सक्तोऽपि संसारवरोरुपाशैः
व्यक्तं स मुक्तो मम संप्रसादात् ॥
श्रीरुद्रमन्त्रान् प्रविहाय मूढः
पञ्चाक्षरीमध्यगतान् विमुक्त्यै
यतेत यः संसृतिपाशबद्धः
त्यक्त्वैव गां सोऽपि खरीं दुहेद्यथा ॥
यो भूसुरो भूसुरजन्मवान् स्या -
त्तेनैव भस्माक्षधरेण जप्यः ।

न चार्थलोभेन न चान्यचेतसा
जप्यः किलायं श्रुतिरत्नकोशः ॥
धृत्वोर्ध्वपुण्ड्रं प्रजपन्निदं यो
रुद्रं नरः पापहमस्य मुक्तिः ।
न लभ्यते तेन स मन्युदग्धो
मयैव किं स्यात्सिकतासु तैलम् ॥

श्रीस्कन्द उवाच -

इत्युक्तं शिववचनं निशम्य विप्रा -
स्तुष्टोऽहं शिपिविष्टमष्टमूर्तिम् ।
जुष्टस्तत्पदकमले हृदीष्टभृङ्गं
संवेक्ष्य प्रणतिमनाः प्रतुष्टुवं हि ॥
देवं तं जयपदपूर्वनव्यभव्य -
स्तव्येन प्रमथपतिं च दिव्यवाग्भिः ।
गव्येनाप्लुतनवसर्पिषा यथेच्छो
हव्येन प्रकटशिखोऽथ हव्यवाहः ॥

इति श्री शिवरहस्ये महेतिहासे शतसाहस्रिकायां संहितायां ईशाख्ये
द्वादशे अंशे उमामहेश्वरसंवादे श्रीस्कन्ददेवोक्ते श्रीरुद्रभाष्ये
रुद्रार्थविवरणस्तवो नाम त्रयस्त्रिंशोऽध्यायः ॥

END OF CHAPTER- 33 IN ŚIVARAHASYA

वाराणसीवासलोल नारायणमनीषिणा ।
काशी विश्वेशकृपया पूरितं रुद्रभाष्यकम् ॥
शुभं भूयात्